greatest disciple, Shin ran, established his sect with the view of maintaining the principles of his teacher Gen-ku Shin ran called his sect Ziô dô shin shu, or True Sect of the Pure Land, now shortened into Shin shu or True Sect In the same year he compiled a work, collecting numerous maxims and adding short but important notes Shin ran was born in the noble family of Hino in Kioto in A D 1173 In his ninth year, A D 1181, he became a priest of the Ten dai sect, which he left in his twenty-ninth year, A D 1201 Then he became a disciple of Gen ku, and shared the misfortune of the latter in his thirty fifth year, A D 1207, when he was exiled to the province of *Yeki gô* Five years after he was set free and he travelled through the north eastern provinces during twenty years preaching the doctrine of the Pure Land He was in his fifty-second year when he established his sect After that he wrote several books, both in Chinese and Japanese in which he firmly established his system of teaching faith and morality equally, while prohibiting strictly all kinds of superstitious practices In A D 1262, Shin ran died when he was ninety years of age Before and after his death his disciples and descendants (as he was a married priest) have constantly gone to different places and made the True Sect of the Pure Land known to the people There are many works on the life of Shin ran

There is another and still later sect of this doctrine of the Pure Land called *Z*i shu or Sect which performs worship at fixed times—six times in a day and night It was founded by the Japanese priest Ippen in A D 1276, who died in 1289[1]

Besides the above four sects viz Yu dzû nen butsu shu *Z*iô do shu Shin shu and *Z*i shu there is another sect called Ten dai (Thien thâi in Chinese sound) which also holds the doctrine of the Pure Land while in the six remaining Buddhist sects still existing in Japan this doctrine is generally not taught

The following two tables will show the result of the religious census of 1880 with the dates of the establishment of the eleven Buddhist sects in Japan

The number of the Shinto temples and of the preachers and students professing the Shinto faith has been added for the sake of comparison The Shinto temples in Japan are numerous but the number of preachers and students is comparatively small

[1] Butsu zô dzu i fasc 5 fol 10a

## 1 SHINTÔIST AND BUDDHIST TEMPLES (YASHIRO AND TERA RESPECTIVELY) IN JAPAN.

| SECT. | DATE | NUMBER | TOTAL. |
|---|---|---|---|
| Shintô . . . . | . . . . . . . . . . . | . . | 186,702 |
| 1. Hossô . . | First established about A D 660, but included in the Shin-gon from A D 1872 to 1882. | | |
| 2. Ten-dai[1] . . | A D 805 . . . | 4,785 | 72,158 (sects 2–11) |
| 3 Shin-gon . . | " 816 . . | 12,928 | |
| 4 Yu dzû nen butsu[1] | " 1127 . . . . | 362 | |
| 5 *Zið-dð*[1]. . . | " 1174, or about 1220 . | 8,314 | |
| 6 Rin zai . . | " 1191 . . . . . | 6,155 | |
| 7 *Shin shiu*[1] | " 1224 . . | 19,208 | |
| 8. Sô-tô . | " 1227 . . . | 14,334 | |
| 9 Ni*ki* ren | " 1253 . . . | 4,970 | |
| 10 *Zi*-shiu[1] . . | " 1276 . . . . . | 525 | |
| 11. Wô-baku . . | " 1624 . . . . | 577 | |

[1] Nos 2, 4, 5, 7, 10 are the sects among which the doctrine of the Pure Land is wholly or partially taught.

## 2 SHINTÔIST AND BUDDHIST PREACHERS AND STUDENTS

| SECT | PREACHERS | | STUDENTS | | |
|---|---|---|---|---|---|
| | Male | Female | Male | Female | TOTAL. |
| *Shintô* | 21,311 | 110 | 1,493 | 68 | 1,561 |
| 1 Hossô | | | | | |
| 2. Ten dai | 4,694 | 60 | 808 | 18 | 826 |
| 3 Shin-gon | 9,335 | 71 | 1,957 | 18 | 1,975 |
| 4 Yu-dzû nen-butsu | 296 | 13 | 111 | [illegible] | 119 |
| 5 *Ziô dð* | 10,427 | 209 | 2,188 | 418 | 2,606 |
| 6 Rin-zai | 5,919 | 135 | 1,256 | 157 | 1,413 |
| 7 Shin-shiu | 24,699 | 2 | 5,194 | . . | 5,194 |
| 8 Sô tô | 16,093 | 620 | 3,098 | 692 | 3,790 |
| 9 Ni*ki*-ren | 5,370 | 78 | 1,202 | 30 | 1,232 |
| 10 *Zi* shiu . | 497 | 8 | 103 | . | 103 |
| 11 Wô baku | 471 | 17 | 99 | | 99 |
| | 99 112 | 1,323 | 17,509 | 1,409 | 18,918 |

OXFORD, May 1883.

॥ सुखावतीव्यूहः ॥

ओँ नमो रत्नत्रयाय[1]। ओँ नमः श्रीसर्वबुद्धबोधिसत्त्वेभ्यः[2]। नमो दशदिगनंतापर्यंतलोकधातुप्रतिष्ठितेभ्यः सर्वबुद्धबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धेभ्यो[3]ऽतीतानागतप्रत्युत्पन्नेभ्यः। नमोऽमिताभाय[4]। नमोऽचिंत्यगुणांतरात्मने[5] ॥

[6]नमोऽमिताभाय जिनाय ते मुने।
सुखावतीं यामि ते चा[7]नुकंपया ॥
सुखावतीं कनकविचित्रकाननां।
मनोरमां सुगतसुतैरलंकृतां ॥
तवाश्रयं[8] प्रथितयशस्य धीमतः।
प्रयामि तां बहुमणिरत्नसंचयां ॥

एवं मया श्रुतं। एकस्मिन्समये भगवान् राजगृहे[9] विहरति स्म गृध्रकूटपर्वते महता भिक्षुसंघेन सार्धं द्वात्रिंशता भिक्षुसहस्रैः सर्वैरर्हद्भिः क्षीणास्रवैर्निःक्लेशैरुषितवद्भिः सम्यगाज्ञासुविमुक्तचित्तैः परी[10]क्षचित्तैः परिक्षीणभवसंयोजनैरनुप्राप्तस्वकार्थैर्विजितवद्भिरुत्तमदम[11]थप्राप्तैः सुविमुक्तचित्तैः सुविमुक्तप्र-

[1] In B only. [2] त्त left out in A. [3] बु left out in A. [4] P adds नमोऽमितायुषे.
[5] गुणाकरात्मने A C. गुणोत्तरात्मने B. गुणाकरात्मने P. [6] तम A. C. त्रम B.
[7] तयानु°? [8] तथा चाश्रयोम्य° A. तथाश्रयां P तवाश्रया B. तथा चाश्रयाम्य C.
[9] नगरे C [10] परीक्ष° A C P परिक्ष B [11] दमथमथ P. दमशमथ C.

ज्ञैर्महानागैः षडभिज्ञैर्वशीभूतैरष्टविमोक्षध्यायिभिर्वलप्राप्तैरभिज्ञानाभिज्ञैः स्थविरैर्महाश्रावकैः । तद्यथा । आज्ञातकौंडिन्येन१ चाश्वजिता२च वाष्पेण३च महानाम्ना४च भद्रजिता५च यशोदेवेन६च विमलेन७च सुवाहुना८च पूर्णमैत्रायणीपुत्रेण[1] ९चोरुविल्वाकाश्यपेन१०च नदीकाश्यपेन११च गयाकाश्यपेन१२ च कुमारकाश्यपेन१३च महाकाश्यपेन[2]१४च शारिपुत्रेण१५च[3] महामौद्गल्यायनेन१६च महाकौष्ठिल्येन[4]१७च महाकफिलेन[5]१८ च महाचुंदेन१९चानिरुद्धेन२०च नंदिकेन२१च कंपिलेन[6]२२च सुभूतिना२३च रेवतेन२४च खदिरवनिकेन[7]२५च वकुलेन२६च स्वागतेन२७चामोघराजेन२८च पारायणिकेन२९च पत्केन[8]३०च चुल्लपत्केन३१च नंदेन३२च राहुलेन३३चायुष्मता[9]नंदेन[10] च३४ । एतैश्चान्यैश्चाभिज्ञानाभिज्ञैः स्थविरैर्महाश्रावकैरेकं पुद्गलं स्थापयित्वा शैक्षप्रतिपद्युत्तरिकरणीयं यदिदमायुष्मंतमानंदं । मैत्रेयपूर्वंगमैश्च संवहुलैर्वोधिसत्त्वैर्महासत्त्वैः ॥१॥

अथ खल्वायुष्मानानंद उत्थायासनादेकांसमुत्तरासंगं कृत्वा दक्षिणजानुमंडलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनांजलिं प्रणम्य भगवंतमेतदवोचत् । [11] विप्रसन्नानि तव भगवत इंद्रियाणि

[1] पूर्णमैत्रायणीपुत्रेण P. The other MSS read पूर्णेन च मै° [2] महाकात्यायनेन C
[3] च P न C [4] कौष्ठिल्येन A B °ल्लेन P C [5] फिरेन A स्फिन B स्फिलेन C
[6] कर्मिरेण C कम्फिलेन P कस्फिलेन? From Karmira to Ânanda left out in A B
[7] See, however Pân VIII 4 5 [8] पत्केन, twice, P पत्येन, meant for पन्थेन twice, C
[9] आयुष्मतेन C [10] चानन्देन च C P See for these names the Smaller Sukhâvatîvyûha § 1, Lal Vist p 1 [11] Cf Lal Vist p 526, l 7

परिशुद्धश्छविवर्णः पर्यवदातो मुखवर्णः पीतनिर्भासः। तद्यथापि नाम शारदं वनदं[1] पांडु परिशुद्धं पर्यवदातं पीतनिर्भासं एवमेव भगवतो विप्रसन्नानींद्रियाणि परिशुद्धो मुखवर्णः पर्यवदातश्छविवर्णः पीतनिर्भासः। तद्यथापि नाम भगवञ्जांबूनदसुवर्णनिष्को दक्षेण कर्मारेण कर्मारांतवासिना[2] वोल्कामुखेन[3] संप्रवेश्य सुपरिणिष्ठितः पांडुकंबल उपरिणिक्षिप्तो[4]ऽतीव परिशुद्धो भवति पर्यवदातः पीतनिर्भासः एवमेव भगवतो विप्रसन्नानींद्रियाणि परिशुद्धो मुखवर्णः पर्यवदातश्छविवर्णः पीतनिर्भासः। न खलु पुनरहं भगवन्नभिजानामीतः पूर्वतरमेवं विप्रसन्नानि तथागतस्येंद्रियाण्येवं परिशुद्धं मुखवर्णं पर्यवदातं छविवर्णं पीतनिर्भासं। तस्य मे भगवन्नेवं भवति बुद्धविहारेण बताद्य तथागतो विहरति जिनविहारेण सर्वज्ञताविहारेण महानागविहारेण बताद्य तथागतो विहरति अतीतानागतप्रत्युत्पन्नान्वा तथागतानर्हतः सम्यक्संबुद्धान्समनुस्मरतीति। एवमुक्ते भगवानायुष्मंतमानंदमेतदवोचत्। साधु साध्वानंद किं पुनस्ते देवता एतमर्थमारोचयंत्युताहो बुद्धा भगवंतः अथ तेन प्रत्युत्पन्नमीमांसाज्ञानेनैवं प्रजानासीति। एवमुक्त आयुष्मानानंदो भगवंतमेतदवोचत्। न मे भगवन्देवता एतमर्थमारोचयंति नापि बुद्धा भगवंतः अथ तर्हि मे भगवंस्तेनैव प्रत्यात्ममीमांसाज्ञानेनैवं भवति बुद्धविहारेणाद्य तथागतो विह-

[1] वरद P  वनद A  वन B  deest in C  [2] करातवासिना A B C  कर्मातरवासिनीव I  [3] मुखे C  [4] नि A P C  See, however, Pân viii 4 18

रति जिनविहारेण सर्वज्ञताविहारेण वताद्य तथागतो विहरत्य-
तीतानागतप्रत्युत्पन्नान्वा बुद्धान्भगवतः समनुस्मरतीति। एवमुक्ते
भगवानायुष्मंतमानंदमेतदवोचत्। साधु साध्वानंदोदारः खलु त
उन्मिंजो भद्रिका मीमांसा कल्याणं प्रतिभानं बहुजनहिताय
त्वमानंद प्रतिपन्नो बहुजनसुखाय लोकानुकंपायै महतो जनका-
यस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च यस्त्वं तथा-
गतमर्थं परिप्रष्टव्यं मन्यसे। एवमेव भगवत्स्वानंदस्तथागतेष्वर्हत्सु
सम्यक्संबुद्धेष्वप्रमेयेष्वसंख्येयेषु ज्ञानदर्शनमुपसंहरेन्न तथागतस्य
ज्ञानमुपहन्येत। तत्कस्य हेतोः। अप्रतिहतहेतुज्ञानदर्शनो ह्यानंद
तथागतज्ञान आकांक्षन्नानंद तथागत एकपिंडपातेन कल्पं वा
तिष्ठेत्कल्पशतं वा कल्पसहस्रं वा कल्पशतसहस्रं वा यावत्कल्प-
कोटीनियुतशतसहस्रं[1] वा ततो वोत्तरि तिष्ठेत्[2] न च तथागत-
स्येंद्रियाण्युपनश्येयुर्न मुखवर्णस्यान्यथात्वं भवेन्नापि च्छविवर्ण
उपहन्येत। तत्कस्य हेतोः। तथा ह्यानंद तथागतः समाधिमुख-
पारमिताप्राप्तः। सम्यक्संबुद्धानामानंद लोके सुदुर्लभः प्रादुर्भावः।
तद्यथोदुंवरपुष्पाणां लोके प्रादुर्भावः सुदुर्लभो भवति एवमेवानंद
तथागतानामर्थकामानां हितैषिणामनुकंपकानां महाकरुणाप्र-
तिपन्नानां सुदुर्लभः प्रादुर्भावः। अपि तु खल्वानंद तथागत-
स्यैव सोऽनुभावो[3] यस्त्वं[4] सर्वलोकाचार्याणां सत्त्वानां लोके
प्रादुर्भावाय बोधिसत्त्वानां महासत्त्वानामर्थाय तथागतमेतमर्थं

[1] From कल्पशतं to सहस्रं deest in C B, and कोटीनियुत stands in I only [2] उत्तरि-ष्ठेत् A P deest in C B [3] सनुभाव C P निभाव A निर्भाव B [4] यस्य ?

परिप्रष्टव्यं मन्यसे। तेन ह्यानंद शृणु साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। एवं भगवन्नित्यायुष्मानानंदो भगवतः प्रत्यश्रौषीत् ॥२॥

भगवानानंदमेतदवोचत्। भूतपूर्वमानंदातीतेऽध्वनीतोऽसंख्येये कल्पेऽसंख्येयतरे विपुलेऽप्रमेयेऽचिंत्ये यदासीत्तेन कालेन तेन समयेन दीपंकरो नाम तथागतोऽर्हन्सम्यक्संबुद्धो लोक उदपादि। १दीपंकरस्यानंद परेण परतरं२प्रतापवान्नाम तथागतोऽभूत्। तस्य परेण परतरं३प्रभाकरो नाम तथागतोऽभूत्। तस्य परेण परतरं४चंदनगंधो नाम तथागतोऽभूत्। तस्य परेण परतरं५सुमेरुकल्पो नाम तथागतोऽभूत्। एवं चंदनो६नाम विमलाननो नाम७अनुपलिप्तो नाम८विमलप्रभो नाम९नागा[1]भिभूर्नाम१०सूर्यानदो नाम११गिरिराजघोषो नाम१२मेरुकूटो नाम१३सुवर्णप्रभो नाम१४ज्योतिष्प्रभो नाम[2]१५वैडूर्यनिर्भासो नाम१६ब्रह्मघोषो नाम१७चंद्राभिभूर्नाम१८तूर्यघोषो[3] नाम१९मुक्तकुसुमप्रतिमंडितप्रभो नाम२०श्रीकूटो नाम२१सागरवरबुद्धिविक्रीडिताभिज्ञो नाम२२वरप्रभो नाम२३महागंधराजनिर्भासो नाम२४व्यपगतखिलमलप्रतिघोषो नाम२५शूरकूटो नाम२६रणंजहो[5] नाम२७महागुणधरबुद्धिप्राप्ताभिज्ञो नाम २८चंद्रसूर्यजिह्मीकरणो नाम२९उत्तप्तवैडूर्यनिर्भासो नाम३०चित्तधाराबुद्धिसंकुसुमिताभ्युद्गतो नाम३१पुष्पावतीवनराजसंकुसुमि-

[1] नागाभिभू A B P  साभिभू C  नागाभिभू Chin transl  [2] C inserts वैडूर्यप्रभ.
[3] सूर्य° P  भूर्य° B  [4] मुकुट° P  [5] रणजहा A P

ताभिज्ञो नाम३२पुष्पाकरो नाम३३उदकचंद्रो नाम३४अविद्यांधकारविध्वंसनकरो नाम३५लोकेंद्रो नाम३६मुक्तच्छत्रप्रवातसदृशो नाम३७तिष्यो[1] नाम३८धर्ममतिविनंदितराजो नाम३९सिंहसागरकूटविनंदितराजो नाम४०सागरमेरुचंद्रो नाम४१ब्रह्मस्वरनादाभिनंदितो नाम४२कुसुमसंभवो नाम४३प्राप्तसेनो नाम ४४चंद्रभानुर्नाम४५मेरुकूटो[2] नाम४६चंद्रप्रभो नाम४७विमलनेत्रो नाम४८गिरिराजघोषेश्वरो नाम४९कुसुमप्रभो नाम५०कुसुमवृष्ट्यभिप्रकीर्णो नाम५१रत्नचंद्रो नाम५२पद्मबिंब्युपशोभितो नाम५३चंदनगंधो नाम[3]५४रत्नाभिभासो नाम५५निमिर्नाम[4]५६ महाव्यूहो नाम५७व्यपगतखिलदोषो नाम५८ब्रह्मघोषो नाम ५९सप्तरत्नाभिवृष्टो नाम६०महागुणधरो नाम६१महातमालपत्रचंदनकर्दमो नाम६२कुसुमाभिज्ञो नाम६३अज्ञानविध्वंसनो नाम६४केशरी नाम६५मुक्तच्छत्रो नाम६६सुवर्णगर्भो नाम६७ वैडूर्यगर्भो नाम६८महाकेतुर्नाम६९धर्मकेतुर्नाम७०रत्नकेतुर्नाम[5] ७१रत्नश्रीर्नाम७२लोकेंद्रो नाम७३नरेंद्रो नाम७४कारुणिको नाम७५लोकसुंदरो नाम७६ब्रह्मकेतुर्नाम७७धर्ममतिर्नाम७८सिंहो नाम७९सिंहमतिर्नाम८०[6]। सिंहमतेरानंद परेण परतरं८१ लोकेश्वरराजो नाम तथागतोऽर्हन्सम्यक्संबुद्धो लोक उदपादि

[1] तिष्यो A B गमिष्यो C, deest in P. [2] मेरुकृतो A कूटो B P C

[3] P inserts तरगध?  [4] मिमिर्नाम A मिमि नाम B निर्मि नाम C निमि नाम P

[5] रत्नकेतुर्नाम in C only  [6] For the names of the Buddhas see Lal Vist p 5, and Childers s v buddho

विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। तस्य खलु पुनरानंद लोकेश्वरराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचने[1] धर्माकरो नाम भिक्षुरभूदधिमात्रं स्मृतिमान्मतिमान्गतिमान्प्रज्ञावानधिमात्रं वीर्यवानुदाराधिमुक्तिकः ॥३॥[2]

अथ खल्वानंद स धर्माकरो भिक्षुरुत्थायासनादेकांसमुत्तरासंगं कृत्वा दक्षिणजानुमंडलं पृथिव्यां प्रतिष्ठाप्य येनासौ भगवाँल्लोकेश्वरराजस्तथागतस्तेनांजलिं प्रणम्य भगवंतं नमस्कृत्य तस्मिन्नेव समये संमुखमाभिर्गाथाभिरभ्यष्टावीत् ॥

अमितप्रभ अनंततुल्यबुद्धे ।
न च इह अन्य प्रभा विभाति काचित् ।
सूर्यमणिगिरीशचंद्रआभा ।
न तपित[3] भोसिषु एभि सर्वलोके ॥१॥
रूपमपि अनंतु[4] सत्त्वसारे ।
तथ अपि बुद्धस्वरो अनंतघोषः ।
शीलमपि समाधिप्रज्ञवीर्यैः[5] ।
सदृशु न तेऽस्तिह लोकि कश्चिदन्यः ॥२॥
गभिरु विपुलु सूक्ष्मप्राप्तु धर्मो ।
ऽचिंतितु बुद्धवरो यथा समुद्रः ।
तेनोन्नमना न चास्ति शास्तुः ।

[1] प्रचरणे A B. [2] From here to ध्यानसमाधित (p 8, l 7) left out in B. [3] तेपि न A तपित C. तपिन P [4] अनेंद्र P [5] र्वीर्यैः C वीर्यैः P. विर्यैः A.

खिलदोषाज्ञाह्या अतो[1]ऽधिकालं ॥३॥
अथ बुद्धबला[2] अनंततेजा ।
प्रतपति सर्वदिशा नरेंद्रराजा ।
तथ अहु बुद्ध भवि[3] धर्मस्वामी ।
जरामरणात्प्रजां प्रमोचयेयं ॥४॥
दानशमथशीलक्षांतिवीर्ये ।
ध्यानसमाधितथैव[4] अग्रश्रेष्ठां[5] ।
एभि अहु व्रतां समाददामि ।
बुद्ध भविष्यमि सर्वसत्त्वत्राता ॥५॥
बुद्धशतसहस्रकोट्यनेका ।
यथरिव वालिक गंगया अनंता ।
सर्वत अहु पूजयिष्य नाथां ।
शिववरबोधिगवेषको अतुल्यां ॥६॥
गंगारजसमानलोकधातूं ।
तत्र भूयोऽंतरि ये अनंतक्षेत्राः ।
सर्वत प्रभ मुंचयिष्य तत्रा ।
इति एतादृश वीर्यमारभिध्य ॥७॥
क्षेत्र मम उदारु अग्रश्रेष्ठो ।
वरमिह मली संस्कृतेऽस्मिं[7] ।

[1] ग्रतो धिकालं A ग्रतो द्वीपारं P. ग्रतो भिपारं C. ऽभिपारं? [2] चला P. घरा A. C [3] भवित्व A. C. P. [4] समाधितथैव A C P. [5] ष्ठं A. B C. P. [6] गागा A गंगा B C P. [7] सस्कृते स्मिं B C Several syllables are wanting; we expect some reference to the Bodhimandala

असदृश निर्वाणधातुसौख्यं ।
तत्र[1] असत्त्वतया विशोधयिष्ये ॥८॥
दशदिशत समागतानि सत्त्वाः ।
तत्र गता सुख मे दिशंति क्षिप्रं ।
बुद्ध मम प्रमाणु अत्र शिक्षी ।
अवितथवीर्यबलं जनेमि छंदं ॥९॥
दशदिशलोकविदसंगज्ञानी ।
सद मम चित्त प्रजानयंति तेऽपि ।
अविचिगतु अहं सदा वसेयं ।
प्रणिधिबलं न पुनर्विवर्तयिष्ये ॥१०॥४॥

अथ खल्वानंद स धर्माकरो भिक्षुस्तं भगवंतं लोकेश्वरराजं तथागतं संमुखमाभिर्गाथाभिरभिष्टुत्यैतदवोचत्। अहमस्मि भगवन्ननुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामः। पुनः पुनरनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयामि परिणामयामि। तस्य मे भगवाञ्छास्ता तथा धर्मं देशयतु यथाहं क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं। असमसमस्तथागतो लोके भवेयं। तांश्च भगवानाकारान्परिकीर्तयतु यैरहं बुद्धक्षेत्रस्य गुणव्यूहसंपदं परिगृह्णीयां॥ एवमुक्त आनंद भगवाँल्लोकेश्वरराजस्तथागतस्तं भिक्षुमेतदवोचत्। तेन हि त्वं भिक्षो स्वयमेव बुद्धक्षेत्रगुणालंकारव्यूहसंपदं परिगृह्णीष्व। सोऽवोचत्। नाहं भगवंस्तत्सहेयं। अपि तु भगवानेव। भाषस्वान्येषां[2] तथागतानां बुद्धक्षेत्रगुणव्यूहालंकार-

[1] तत्र?   [2] भाषस्त। येषा A C   भाषस्व येषा P   भाजस्व॥ येषा B

संपदं यां श्रुत्वा वयं सर्वाकारं परिपूरयिष्याम इति । अथानंद स लोकेश्वरराजस्तथागतोऽर्हन्सम्यक्संबुद्धस्तस्य भिक्षोराशयं ज्ञात्वा परिपूर्णां वर्षकोटीमेकाशीतिंबुद्धकोटीनियुतशतसहस्राणां बुद्धक्षेत्रगुणालंकारव्यूहसंपदं साकारां सोद्देशां सनिर्देशां संप्रकाशितवानर्थकामो हितैष्यनुकंपकोऽनुकंपामुपादाय बुद्धक्षेत्रानुपच्छेदाय[2] सत्त्वेषु महाकरुणां संजनयित्वा । परिपूर्णाश्चत्वारिंशत्कल्पास्तस्य भगवतस्तथागतस्यायुष्प्रमाणं ॥५॥

अथ खल्वानंद स धर्माकरो भिक्षुर्यास्तेषामेकाशीतिबुद्धकोटीनियुतशतसहस्राणां बुद्धक्षेत्रगुणालंकारव्यूहसंपदस्ताः सर्वा एके बुद्धक्षेत्रे परिगृह्य भगवतो लोकेश्वरराजस्य तथागतस्य[3] पादौ शिरसा वंदित्वा प्रदक्षिणीकृत्य तस्य भगवतोऽतिकान्माक्रामत् । उत्तरि च पंचकल्पान्बुद्धक्षेत्रगुणालंकारव्यूहसंपदमुदारतरां प्रणीततरां च सर्वलोके दशसु दिक्ष्वप्रचरितपूर्वां परिगृहीतवानुदारतरं च प्रणिधानमकार्षीत् ॥६॥

इति ह्यानंद या तेन भगवता लोकेश्वरराजेन तथागतेन तेषामेकाशीतिंबुद्धक्षेत्रकोटीनियुतशतसहस्राणां संपत्तिः कथिता ततो भिक्षुरेकाशीत्युदारप्रणीताप्रमेयतरां बुद्धक्षेत्रसंपत्तिं परिगृह्य येन स तथागतस्तेनोपसंक्रम्य भगवतः पादौ शिरसा वंदित्वैतदवोचत् । परिगृहीता मे भगवन्बुद्धक्षेत्रगुणालंकारव्यूहसंपदिति ॥

[1] एकासते A B. एकाशत C एकशते P. Chinese translations put 21 or 84. [2] मुपदादाय A. मुपच्छेदाय B मुपच्छेदाय P. C. [3] Here A and B insert a Praṇidhâna which ought to come in later [4] मेकार्षीत A. एकार्षीत् B. एकाशीते P. C. [5] रेकाभ्यु° P लोकाभ्यु° A B. रेकाशीत्यु C.

एवमुक्त आनंद स लोकेश्वरराजस्तथागतस्तं भिक्षुमेतदवोचत्। तेन हि भिक्षो भाषस्वानुमोदते तथागतः। अयं कालो भिक्षो प्रमोदय पर्षदं हर्षं जनय सिंहनादं नद यं श्रुत्वा बोधिसत्त्वा महासत्त्वा एतर्ह्यनागते ऽध्वन्येवंरूपाणि बुद्धक्षेत्रगुणसंपत्तिप्रणिधिस्थानानि परिग्रहीष्यंति[1] ॥ अथानंद स धर्माकरो भिक्षुस्तस्यां वेलायां भगवंतमेतदवोचत्। तेन हि शृणोतु मे भगवान्ये मम प्रणिधानविशेषाः। यथा मे ऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्याचिंत्यगुणालंकारव्यूहसमन्वागतं तद्बुद्धक्षेत्रं भविष्यति ॥७॥

॥१॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे निरयो वा तिर्यग्योनिर्वा प्रेतविषयो वासुरो वा कायो[2] भवेन्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२॥ सचेन्मे भगवंस्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुस्ते पुनस्ततश्च्युत्वा निरयं वा तिर्यग्योनिं वा प्रेतविषयं वासुरं वा कायं[3] प्रपतेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं॥

॥३॥ सचेन्मे भगवंस्तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजातास्ते च सर्वे नैकवर्णाः स्युर्यदिदं सुवर्णवर्णा मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥४॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे देवानां च मनुष्याणां च

[1] P and C add परिपूरयिष्यंति A and B परिगृही° C परिगृह्योष्यंति P परिगृहि°, and so generally [2] वाऽसुरो वासुरकायो A B C वा असुरो वासुरका P [3] वाऽसुरं वासुरकाय A B वा असुर वा काय P C See chap 15 The reference to the Asuras is left out in three of the Chinese translations in both places Suras or Devas could hardly be mentioned here with Asuras See however the 4th Praṇidhâna

संपदं यां श्रुत्वा वयं सर्वाकारं परिपूरयिष्याम इति। अथानंद स लोकेश्वरराजस्तथागतोऽर्हन्सम्यक्संबुद्धस्तस्य भिक्षोराशयं ज्ञात्वा परिपूर्णां वर्षकोटीमेकाशीति[1]बुद्धकोटीनियुतशतसहस्राणां बुद्धक्षेत्रगुणालंकारव्यूहसंपदं साकारां सोद्देशां सनिर्देशां संप्रकाशितवानर्थकामो हितैष्यनुकंपकोऽनुकंपामुपादाय बुद्धक्षेत्रानुपच्छेदाय[2] सत्त्वेषु महाकरुणां संजनयित्वा। परिपूर्णांश्चत्वारिंशत्कल्पांस्तस्य भगवतस्तथागतस्यायुष्प्रमाणं ॥५॥

अथ खल्वानंद स धर्माकरो भिक्षुर्यास्तेषामेकाशीतिबुद्धकोटीनियुतशतसहस्राणां बुद्धक्षेत्रगुणालंकारव्यूहसंपदस्ताः सर्वा एके बुद्धक्षेत्रे परिगृह्य भगवतो लोकेश्वरराजस्य तथागतस्य[3] पादौ शिरसा वंदित्वा प्रदक्षिणीकृत्य तस्य भगवतोऽंतिकात्प्राक्रामत्। उत्तरि च पंचकल्पान्बुद्धक्षेत्रगुणालंकारव्यूहसंपदमुदारतरां प्रणीततरां च सर्वलोके दशसु दिक्ष्वप्रचरितपूर्वां परिगृहीतवानुदारतरं च प्रणिधानमकार्षीत् ॥६॥

इति ह्यानंद या तेन भगवता लोकेश्वरराजेन तथागतेन तेषामेकाशीतिंबुद्धक्षेत्रकोटीनियुतशतसहस्राणां संपत्तिः कथिता ततो भिक्षुरेकाशीत्युदारप्रणीताप्रमेयतरां बुद्धक्षेत्रसंपत्तिं परिगृह्य येन स तथागतस्तेनोपसंक्रम्य भगवतः पादौ शिरसा वंदित्वैतदवोचत्। परिगृहीता मे भगवन्बुद्धक्षेत्रगुणालंकारव्यूहसंपदिति॥

[1] एकासते A B. एकाशत C एकशते P Chinese translations put 21 or 84 [2] मुपद्यदाय A. मुपच्चेदाय B मुपच्छेदाय P. C [3] Here A and B insert a Praṇidhâna which ought to come in later [4] मेकार्षीत A. एकार्षीत् B. एकाशीति P. C [5] रेकाभ्यु° P लोकाभ्यु° A B रेकाशीभ्यु C

एवमुक्त आनंद स लोकेश्वरराजस्तथागतस्तं भिक्षुमेतदवोचत्। तेन हि भिक्षो भाषस्वानुमोदते तथागतः। अयं कालो भिक्षो प्रमोदय पर्षदं हर्षं जनय सिंहनादं नद यं श्रुत्वा बोधिसत्त्वा महासत्त्वा एतर्ह्यनागते ऽध्वन्येवंरूपाणि बुद्धक्षेत्रगुणसंपत्तिप्रणिधिस्थानानि परिग्रहीष्यंति[1]॥ अथानंद स धर्माकरो भिक्षुस्तस्यां वेलायां भगवंतमेतदवोचत्। तेन हि शृणोतु मे भगवान्ये मम प्रणिधानविशेषाः। यथा मे ऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्याचिंत्यगुणालंकारव्यूहसमन्वागतं तद्बुद्धक्षेत्रं भविष्यति ॥७॥

॥१॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे निरयो वा तिर्यग्योनिर्वा प्रेतविषयो वासुरो वा कायो[2] भवेन्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२॥ सचेन्मे भगवंस्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुस्ते पुनस्ततश्च्युत्वा निरयं वा तिर्यग्योनिं वा प्रेतविषयं वासुरं वा कायं[3] प्रपतेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३॥ सचेन्मे भगवंस्तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजातास्ते च सर्वे नैकवर्णाः स्युर्यदिदं सुवर्णवर्णा मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥४॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे देवानां च मनुष्याणां च

[1] P and C add परिपूरयिष्यंति A and B परिगृही°. C परिगृह्णीष्यंति P परिगृहि°, and so generally [2] चाऽसुरो वासुरकायो A B C वा असुरो वासुरका P [3] वाऽसुरो वासुरकायं A B वा असुरं वा काय P C See chap 15 The reference to the Asuras is left out in three of the Chinese translations in both places Suras or Devas could hardly be mentioned here with Asuras See, however, the 4th Pranidhâna

नानात्वं प्रज्ञायेतान्यत्र[1] नाम संवृति[2]व्यवहारमात्रा देवमनुष्या इति संख्यागणनातो मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं॥

॥५॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजातास्ते च सर्वे नर्द्धिवशितापरमपारमिताप्राप्ता भवेयुरंतश एकचित्तक्षणलवेन बुद्धक्षेत्रकोटीनियुतशतसहस्रातिक्रमणतयापि मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥६॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुस्ते च सर्वे जातिस्मरा न स्युरंतशः कल्पकोटीनियुतशतसहस्रानुस्मरणतयापि मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥७॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरंस्ते सर्वे न दिव्यस्य चक्षुषो[3] लाभिनो भवेयुरंतशो लोकधातुकोटीनियुतशतसहस्रदर्शनतयापि मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥८॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरंस्ते सर्वे न दिव्यस्य श्रोत्रस्य लाभिनो भवेयुरंतशो बुद्धक्षेत्रकोटीनियुतशतसहस्रादपि युगपत्सद्धर्मश्रवणतया मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

[1] प्रज्ञापयते P. मज्ञायेत् A प्रज्ञापयत् B प्रज्ञयेत् C [2] संत्रवृत्ति A. सत्रवृत्ति B संत्रसंवृत्ति P. C. [3] The Pranidhâna with regard to the divyam čakshuh is placed by A B in chap 6, between तथागतस्य and पादौ, beginning with the words स्मरणतयापि and going on to लाभिनो भवेयुः In C. and P the Pranidhâna stands here in its right place.

॥९॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरंस्ते सर्वे न परचित्तज्ञानकोविदा भवेयुरंतशो बुद्धक्षेत्रकोटीनियुतशतसहस्रपर्यापन्नानामपि सत्त्वानां चित्तचरितपरिज्ञानतया मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥१०॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरंस्तेषां काचित्परिग्रहसंज्ञोत्पद्येतांतशः स्वशरीरेऽपि मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥११॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजायेरंस्ते सर्वे न नियताः स्युर्यदिदं सम्यक्त्वे[1] यावन्महापरिनिर्वाणे मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥१२॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य कश्चित्सत्त्वः श्रावकाणां गणनामधिगच्छेदंतशस्त्रिसाहस्रमहासाहस्रपर्यापन्ना अपि सर्वसत्त्वाः प्रत्येकबुद्धभूताः कल्पकोटीनियुतशतसहस्रमभिगणयंतो मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥१३॥ सचेन्मे भगवंस्तस्मिन्बुद्धक्षेत्रेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य प्रमाणिकी मे प्रभा भवेदंतशो बुद्धक्षेत्रकोटीनियुतशतसहस्रप्रमाणेनापि[2] मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥१४॥ सचेन्मे भगवन्ननुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य

[1] See Childers s. v. râsi

[2] प्रमानेनापि P प्रमानापि A B प्रमाणनापि C

तस्मिन्बुद्धक्षेत्रे सत्त्वानां प्रमाणीकृतमायुष्प्रमाणं भवेदन्यत्र प्रणिधानवशेन मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥ १५ ॥ सचेन्मे भगवन्बोधिप्राप्तस्यायुष्प्रमाणं[1] पर्यन्तीकृतं भवेदंततः कल्पकोटीनियुतशतसहस्रगणनयापि मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥ १६ ॥ सचेन्मे भगवन्बोधिप्राप्तस्य तस्मिन्बुद्धक्षेत्रे सत्त्वानामकुशलस्य नामधेयमपि भवेन्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥ १७ ॥ सचेन्मे भगवन्बोधिप्राप्तस्य नाप्रमेयेषु बुद्धक्षेत्रेष्वप्रमेयासंख्येया बुद्धा भगवंतो नामधेयं परिकीर्तयेयुर्न वर्णं भाषेरन्न प्रशंसामभ्युदीरयेरन्न समुदीरयेयुर्मा[2] तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥ १८ ॥ सचेन्मे भगवन्बोधिप्राप्तस्य ये सत्त्वा अन्येषु लोकधातुष्वनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य मम नामधेयं श्रुत्वा प्रसन्नचित्ता मामनुस्मरेयुस्तेषां चेदहं मरणकालसमये प्रत्युपस्थिते[3] भिक्षुसंघपरिवृतः पुरस्कृतो न पुरतस्तिष्ठेयं यदिदं चित्ताविक्षेपतायै मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

[1] A. and B insert after ष्आयुष्प्रमाणं in § 15, तत्र सत्त्वानां प्रमाणीकृतमायुष्प्रमाणं भवेदन्यत्र प्रणिधानवशेन मा तावद° ध्येयं । सचेन्मे भगवन्बोधिप्राप्तस्यायुष्प्रमाणं. [2] न वर्णं भाषेरन् । न वर्णं भावेरन् A B. C. न वर्णं भाषरन् P न प्रशंसामभ्युदीरये° युः । प्रशंसामभ्युदीरयेयन्न समुदीरयेयुः A. B (exc प्रसं) C. (exc रन्नसमु°) न प्रशंसामभ्युदीरयेरन् । समुदीरयेयुः P.
[3] ते P C तो B. त A

॥१९॥ सचेन्मे भगवन्बोधिप्राप्तस्याप्रमेयासंख्येयेषु बुद्धक्षेत्रेषु ये सत्त्वा मम नामधेयं श्रुत्वा तत्र बुद्धक्षेत्रे चित्तं[1] प्रेरयेयुरुपपत्तये कुशलमूलानि च परिणामयेयुस्ते तत्र बुद्धक्षेत्रे नोपपद्येरन्नंतशो दशभिश्चित्तोत्पादपरिवर्तैः स्थापयित्वानंतर्यकारिणः[2] सद्धर्मप्रतिक्षेपावरणकृतांश्च[3] सत्त्वान्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥[4]

॥२०॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुस्ते सर्वे नैकजातिप्रतिबद्धाः स्युरनुत्तरायां सम्यक्संबोधौ स्थापयित्वा प्रणिधानविशेषांस्तेषामेव बोधिसत्त्वानां महासत्त्वानां महासंनाहं संनद्धानां सर्वलोकार्थसंबुद्धानां सर्वलोकाभियुक्तानां सर्वलोकपरिनिर्वाणाभियुक्तानां सर्वलोकधातुषु बोधिसत्त्वचर्यां चरितुकामानां सर्वबुद्धानां संवर्तुं-[5]कामानां गंगानदीवालुकासमान्सत्त्वाननुत्तरायां सम्यक्संबोधौ प्रतिष्ठापकानां भूयश्चोत्तरिचर्याभिमुखानां समंतभद्रचर्यानिर्यातानां मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२१॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाता भवेयुस्ते सर्वे एकपुरोभक्तेनान्यानि बुद्धक्षेत्राणि गत्वा बहूनि बुद्धशतानि बहूनि बुद्धसहस्राणि बहूनि बुद्धशतसहस्राणि बह्वीर्बुद्धकोटीर्यावद्बहूनि बुद्धकोटीनियुतशतसहस्राणि नोपति-

[1] From चित्तं to बुद्धक्षेत्रे left out in P. [2] See Childers s v pañcānantariyakammam. [3] कृतांश्च P C. कृतां च A. कृताश्च B. [4] A. and B repeat § 19. [5] संधम्वतुं A. संवर्तुं B C सम्वतु P

श्चेरन्सर्वसुखोपधानैस्तदिदं बुद्धानुभावेन मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२२॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे बोधिसत्त्वा यथारूपैराकारैराकांक्षेयुः कुशलमूलान्यवरोपयितुं यदिदं सुवर्णेन वा रजतेन वा मणिमुक्तावैडूर्यशंखशिलाप्रवाडस्फटिकमुसारगल्वलोहितमुक्ताश्मगर्भादिभिर्वान्यतमान्यतमैः सर्वै रत्नैर्वा[1] सर्वगंधपुष्पमाल्यविलेपनधूपचूर्णचीवरछत्त्रध्वजपताकाप्रदीपैर्वा सर्वनृत्यगीतवाद्यैर्वा तेषां च तथारूपा आहाराः सहचित्तोत्पादान्न प्रादुर्भवेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२३॥ [2]सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाता भवेयुस्ते सर्वे न सर्वज्ञतासहगतां धर्मकथां कथयेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२४॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वा एवं चित्तमुत्पादयेयुर्यदिहैव वयं लोकधातौ स्थित्वाप्रमेयासंख्येयेषु बुद्धक्षेत्रेषु[3] बुद्धान्भगवतः सत्कुर्याम गुरुकुर्याम मानयेम पूजयेम यदिदं चीवरपिंडपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः[4] पुष्पधूपदीपगंधमाल्यविलेपनचूर्णचीवरछत्त्रध्वजपताकाभिर्नानाविधनृत्यगीतवाद्यै रत्नवर्षैरिति तेषां च बुद्धा भगवंतः सहचि-

[1] After रत्नमैः सर्वै र A B leave out till नुत्तरां सम्यक्संबोधि etc [2] The 23rd Praṇidhāna is left out in C [3] उत्पादषु A उत्पादपुः B उत्पदेषु P [4] परिस्कारैः B. परिस्कैट A परिष्कारैः P

त्तोत्पादान्न प्रतिगृह्णीयुर्यदिदमनुकंपामुपादाय मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२५॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाता भवेयुस्ते सर्वे न नारायणवज्रसंहतात्मभावस्थामप्रतिलब्धा भवेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२६॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे यः कश्चित्सत्त्वोऽलंकारस्य वर्णपर्यन्तमुद्गृह्णीयादंतशो दिव्येनापि चक्षुषैवंवर्णमेवंविभूतीदं बुद्धक्षेत्रमिति[1] नानावर्णतां जानीयान्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२७॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे यः सर्वपरीत्तकुशलमूलो बोधिसत्त्वो सोऽन्तशो योजनशतोत्थितमुदारवर्णं बोधिवृक्षं न संजानीयान्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२८॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे कस्यचित्सत्त्वस्योद्देशो वा स्वाध्यायो वा कर्तव्यः स्यान्न ते सर्वे प्रतिसंवित्प्राप्ता भवेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥२९॥ सचेन्मे भगवन्बोधिप्राप्तस्य नैवं प्रभास्वरं तद्बुद्धक्षेत्रं भवेद्यत्र समंतादप्रमेयासंख्येयाचिंत्यातुल्यापरिमाणानि बुद्धक्षे-

[1] एवं वर्णा एवंविभूतिरिदं बुद्धक्षेत्रमेति A. एवं वर्णाः एवं विभूतिरिदं बुद्धक्षेत्रमिति B. एव वर्णा एवं विभूतिरिदं बुद्धक्षेत्रमिति C P.

चाणि संदृश्येरन्[1] तद्यथापि नाम परिमृष्ट आदर्शमंडले मुखमंडलं मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३०॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे धरणीतलमुपादाय यावदंतरीक्षाद्देवमनुष्यविषयातिक्रांतस्याभिजातस्य धूपस्य तथागतबोधिसत्त्वपूजाप्रत्यर्हस्य सर्वरत्नमयानि नानासुरभिगंधघटिकाशतसहस्राणि सदा निधूपितान्येव न स्युर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३१॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे न सदाभिप्रवृष्टान्येव सुगंधिनानारत्नपुष्पवर्षाणि सदा प्रवादिताश्च मनोज्ञस्वरा वाद्यमेघा न स्युर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३२॥ सचेन्मे भगवन्बोधिप्राप्तस्य ये सत्त्वा अप्रमेयासंख्येयाचिंत्यातुल्येषु लोकधातुष्वाभया[2] स्फुटा भवेयुस्ते सर्वे न देवमनुष्यसमतिक्रांतेन सुखेन समन्वागता भवेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३३॥ सचेन्मे भगवन्बोधिप्राप्तस्य समंतादप्रमेयाचिंत्यातुल्यापरिमाणेषु बुद्धक्षेत्रेषु बोधिसत्त्वा महासत्त्वा मम नामधेयं श्रुत्वा तच्छ्रवणसहगतेन कुशलेन जातिव्यतिवृत्ता संतो न धारणीप्रतिलब्धा भवेयुर्यावद्बोधिमंडपर्यंतमिति मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

[1] संदृश्यते A संदृश्यते B संदृश्यन् C संदृश्यत्न् P. [2] P reads यप्रमेयासंख्येयाचिंत्यातुल्यथाभया स्फुता भवेयुः.

॥३४॥ सचेन्मे भगवन्बोधिप्राप्तस्य समंतादप्रमेयासंख्येयाचिंत्यातुल्यापरिमाणेषु बुद्धक्षेत्रेषु याः स्त्रियो मम नामधेयं श्रुत्वा प्रसादं[1] संजनयेयुर्बोधिचित्तं नोत्पादयेयुः स्त्रीभावं च न विजुगुप्सेरन् जातिव्यतिवृत्ताः समानाः सचेद्द्वितीयं स्त्रीभावं प्रतिलभेरन्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३५॥ सचेन्मे भगवन्बोधिप्राप्तस्य समंताद्दशसु दिक्ष्वप्रमेयासंख्येयाचिंत्यातुल्यापरिमाणेषु बुद्धक्षेत्रेषु ये बोधिसत्त्वा मम नामधेयं श्रुत्वा प्रणिपत्य पंचमंडलनमस्कारेण वंदिष्यंते ते बोधिसत्त्वचर्यां चरंतो न सदेवकेन लोकेन सत्क्रियेरन्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३६॥ सचेन्मे भगवन्बोधिप्राप्तस्य कस्यचिद्बोधिसत्त्वस्य चीवरधावनशोषणसीवनरंजनकर्म कर्तव्यं भवेन्न त्वेव नवाभिजातचीवररत्नैः प्रावृतमेवात्मानं संजानीयुः[4] सहचित्तोत्पादात्तथागतानुज्ञातैर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३७॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे सहोत्पन्नाः सत्त्वा नैवंविधं सुखं प्रतिलभेरंस्तद्यथापि नाम निष्परिदाहस्यार्हतो भिक्षोस्तृतीयध्यानसमापन्नस्य मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३८॥ सचेन्मे भगवन्बोधिप्राप्तस्य तत्र बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजातास्ते यथारूपं बुद्धक्षेत्रे गुणालंकारव्यूहमाकांक्षेयुस्तथा-

[1] प्रसादं A P प्रामादं B [2] धोयन A B C धायन P [3] न चेप न नवाभि° A. न त्वेष नवाभि B न त्वेप मननाभि° C न त्वत ननाभि P [4] जानीयान्?

रूपं नानारत्नवृक्षेभ्यो न संजनयेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥३९॥ सचेन्मे भगवन्बोधिप्राप्तस्य मम नामधेयं श्रुत्वान्यबुद्धक्षेत्रोपपन्ना बोधिसत्त्वा इंद्रियबलवैकल्यं गच्छेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥४०॥ सचेन्मे भगवन्बोधिप्राप्तस्य तदन्यबुद्धक्षेत्रस्थाने बोधिसत्त्वा मम नामधेयसहश्रवणान्न सुविभक्तवतीं नाम समाधिं प्रतिलभेरन्यत्र समाधौ स्थित्वा बोधिसत्त्वा एकक्षणव्यतिहारेणाप्रमेयासंख्येयाचिंत्यातुल्यापरिमाणान्बुद्धान्भगवतः पश्यंति स चैषां समाधिरंतरा विप्रणश्येन्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥४१॥ सचेन्मे भगवन्बोधिप्राप्तस्य तदन्येषु बुद्धक्षेत्रेषु[3] मम नामधेयं श्रुत्वा तच्छ्रवणसहगतेन[4] कुशलमूलेन सत्त्वा नाभिजातकुलोपपत्तिं प्रतिलभेरन्यावद्बोधिपर्यंतं मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

॥४२॥ सचेन्मे भगवन्बोधिप्राप्तस्य तदन्येषु बुद्धक्षेत्रेषु ये बोधिसत्त्वा मम नामधेयं श्रुत्वा तच्छ्रवणकुशलमूलेन यावद्बोधिपर्यंतं ते सर्वे बोधिसत्त्वचर्याप्रीतिप्रामोद्यकुशलमूलसमवधानगता न भवेयुर्मा तावदहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं ॥

[1] य सह A B C P [2] एकक्षणव्य° A B C P [3] तदन्येषु बुद्धक्षेत्रेषु left out in C P [4] च्छ्रवणसहगतेन B C P च्छ्रवन A [5] कुशलो° B [6] तच्छ्रवनेन A तच्छ्रयन P तच्छ्रवणेन B तच्छ्रवण D

धानविशेषान्निर्दिश्य तस्यां वेलायां बुद्धानुभावेनेमा गाथा अभाषत ॥

सचि मि[1] -- विशिष्ट नेवरूपा ।
वरप्रणिधान सिया खु बोधिप्राप्तो[2] ।
माह सिय गवेंद्र[3] सत्त्वसारो ।
दशबलधारि[4] अतुल्यदक्षिणीयः ॥१॥
सचि मि सिय न क्षेत्र एवरूपं ।
बहु अध नानप्रभूतदिव्यवित्तं[7] ।
सुखित नरक येय[8] दुःखप्राप्तो ।
माह सिया रत्नान -- राजा[9] ॥२॥
सचि मि उपगतस्य बोधिमंड ।
दशदिशि प्रव्रजि नामधेयु क्षिप्रं[10] ।
पृथु बहव अनंतबुद्धक्षेत्रा ।
माह सिया बलप्राप्तु लोकनाथः ॥३॥
सचि खु अहु रमिय कामभोगां ।
स्मृतिमतिया गतिया[11] विहीनु संतः ।

[1] सचि नि B After this two syllables are wanting in all the MSS, but one MS of the Bibliotheque Nationale at Paris reads ष्ठमि, which may be meant for स्याम or थामि, only that the first syllable ought to be short [2] °प्राप्तो A ‖ P which may also be °प्राप्ते। written too closely [3] माह सियद्भवेन्द्र A C °चन्द्र B माक सियतगवेन्द्र P [4] दशवलध्यनि P [5] महुधनाना° C [6] म is left out in A B [7] °चित्त B C P [8] एकये य? [9] मोह सिय रत्नान राजा A °रत्नोनगरराजा P मोह सिय रत्नान राना B °रत्नोन राजा C रत्नान, for रत्नानां [10] न seems to be wanted [11] गतिया left out in A B, see Lal Vist p 84 l 15

अतुलशिव समेयमान[1] वोधि ।
माह सिया वलप्राप्तु[2] शास्त लोके[3] ॥४॥
विपुलप्रभ अतुल्यनंत[4] नाथ ।
दिशि विदिशि[5] स्फुरि सर्वबुद्धक्षेत्रा[6] ।
राग प्रशमि सर्वदोषमोहां ।
नरकगतिस्मि[7] प्रशामि धूमकेतुं ॥५॥
जनिय सुरुचिरं विशालनेत्रं[9] ।
वि[10]धुनिय सर्वनराण [11]अंधकारं ।
अपनिय सु न अक्षणानशेषां[12] ।
उपनयि स्वर्गगताननंततेजां[13] ॥६॥
न तपति नभ[14] चंद्र[15]सूर्यआभा ।
मणिगण अग्निप्रभा न देवतानां ।
अभिभवति नरेंद्र आभ सर्वा ।
पुरिमचरि परिशुद्ध आचरित्वा ॥७॥
पुरुषवरु निधान दुःखितानां ।
दिशि विदिशासु न[16] अस्ति एवरूपः[17] ।

[1] °माना A B C P cf Pâli sameto
[2] माह्र सिया वल प्राप्तु A B C P
[3] शास्तु लोको A B शास्त लोके P लोके C शास्त being left out
[4] °ल्यानत A B C P
[5] *विदिश C P विदि A B*
[6] क्षेत्रा C क्षेत्रा B P क्षत्रा A
[7] B inserts ग.
[8] धूम° C P धूम A B
[9] विशाल° C
[10] विधू° A B C, P
[11] स is left out in A B
[12] अपनय सुरक्षणानाशेषा A अपय° B सुपलिय सुन अक्षनानशेषा P अपरिय सुन अक्षणानशेषां C II may be apahya
[13] °गतानन्ततेजा A B °गताननन्ततेजा C P
[14] नभव C
[15] चन्द्र deest in C
[16] भुन B
[17] एवरूप A एवरूप B एवरूपा C P

कुशलंशतसहस्रसर्वपूर्णं ।
पर्यंगतो नदि बुद्धसिंहनादं ॥८॥
पुरिमजिनस्वयंभु[3] सत्करित्वा ।
व्रततपंकोटि चरित्व अप्रमेयां ।
प्रवरवरसमे स्मि[5] ज्ञानस्कंध ।
प्रणिधिवलप्रतिपूर्णसत्त्वसारो ॥९॥
यथ भगव असंगज्ञानदर्शी ।
त्रिविध प्रजानति संस्कृते नरेंद्रः ।
अहमपि सिय तुल्यदक्षिणीयो ।
विदुप्रवरो नरनायको नराणां ॥१०॥
सचि मि अयु नरेंद्र एवरूपा ।
प्रणिधि समृध्यति वोधि प्रापुणित्वा ।
चलतु[7] अय सहस्रलोकधातु ।
कुसुमप्रवर्षण भातु देवसंघां[8] ॥११॥
प्रचलित[9] वसुधा प्रवर्षि पुष्पाः ।
तूर्यशता गगनेऽथ संप्रणेदुः ।
दिव्यरुचिर[10]चंदनस्य चूर्णा ।
अवकिरि[11] चैव भविष्य लोकि बुद्ध[12] इति ॥१२॥९॥

[1] सकल° A B C [2] बुद्ध C [3] यभू A B C यभू P [4] व्रय A तप C P यय B See Lal Vist p 360 [5] स्मि A B C स्मि P [6] ज्ञात° A. B [7] चरतु A B [8] भातु देवसंघा A C भावतु देवसंघा B भातुदवसंघा P [9] प्रचरित A B P चरित deest in C [10] °रुचिल° A °रुचिर° B C P [11] °किरि A [12] See Lal Vist p 317

एवंरूपयानंद प्रणिधानसंपदा स धर्माकरो भिक्षुर्बोधिसत्त्वो महासत्त्वः समन्वागतोऽभूत्। एवंरूपया चानंद प्रणिधानसंपदाल्पका बोधिसत्त्वाः समन्वागताः। अल्पकानां चैवंरूपाणां प्रणिधीनां[1] लोके प्रादुर्भावो भवति। परीत्तानां न पुनः सर्वशो नास्ति॥ स खलु पुनरानंद धर्माकरो भिक्षुस्तस्य भगवतो लोकेश्वरराजस्य तथागतस्य पुरतः सदेवकस्य लोकस्य[2] समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः[3] प्रजायाः सदेवमानुषासुरायाः पुरत इमानेवंरूपान्प्रणिधानविशेषान्निर्दिश्य यथाभूतप्रतिज्ञाप्रतिपत्तिप्रतिष्ठितोऽभूत्। स इमामेवंरूपां बुद्धक्षेत्रपरिशुद्धिं बुद्धक्षेत्रमाहात्म्यं बुद्धक्षेत्रोदारतां समुदानयन्बोधिसत्त्वचर्यां चरन्नप्रमेयासंख्येयाचिंत्यातुल्यामाप्यापरिमाणानभिलाप्यानि वर्षकोटीनियुतशतसहस्राणि न जातु कामव्यापादविहिंसावितर्कान् वितर्कितवान्न जातु कामव्यापादविहिंसासंज्ञामुत्पादितवान्न जातु रूपशब्दगंधरसस्प्रष्टव्यसंज्ञामुत्पादितवान्। स दहरमनोहर एव सुरतो[5]ऽभूत्सुखसंवासोऽधिवासनजातीयः सुभगः सुपोषोऽल्पेच्छः संतुष्टः प्रविविक्तोऽदुष्टोऽमूढोऽशको[6]ऽजिह्मोऽशठोऽमायावी सुखिलोमः प्रियालापो नित्याभियुक्तः[7] शुक्लधर्मपर्येष्टौ सुनिक्षिप्तधुरः सर्वसत्त्वानामर्थाय महाप्रणिधानं समुदानितवान्

[1] प्रणिधीना A प्रणिधाना B प्रणिधिना C प्रनिधिना P [2] लोकस्य left out in P [3] ब्राह्मणिकाया A B C ब्राह्मनिकाया P [4] प्रतिज्ञातिप्रप° A B प्रतिज्ञाप्रतिप° C प्रतिज्ञातिप्रतिप° P [5] सुरतो B C P शुरतो A [6] ऽपको A B ऽपक्को C ऽपक P (चपलो ?) [7] नित्यायुक्त A B C

बुद्धधर्मसंघाचार्योपाध्यायकल्याणमित्रसगौरवो नित्यसंनद्धो बोधिसत्त्वचर्यायामार्जवो मार्दवोऽकुहकोऽनिलपको[1] गुणवान्पूर्वंगमः सर्वकुशलधर्मसमादापनतायै शून्यतानिमित्ताप्रणिहितानभिसंस्कारानुत्पादविहारैर्निर्माणः स्वारक्षितवाक्यश्चाभूत्। बोधिसत्त्वचर्यां चरन्स यद्वाक्कर्मोत्सृष्टमात्मपरोभयव्यापादाय[3] संवर्तते तथाविधं त्यक्त्वा यद्वाक्कर्म स्वपरोभयहितसुखसंवर्तकं तदेवाभिप्रयुक्तवान् । एवं च संप्रजानोऽभूद्ग्रामनगरनिगमजनपदराष्ट्रराजधानीष्ववतरन्[5] जातु रूपशब्दगंधरसस्प्रष्टव्यधर्मेष्वनुनीतोऽभूत् ॥ अप्रतिहतः स बोधिसत्त्वचर्यायां चरन्स्वयं च दानपारमितायामचरत्परांश्च तत्रैव समादापितवान् स्वयं च[6]शीलक्षांतिवीर्यध्यानप्रज्ञापारमितास्वचरत्परांश्च तत्रैव समादापितवान् । तथारूपाणि च कुशलमूलानि समुदानीतवान् यैः[9] समन्वागतो यत्र यत्रोपपद्यते तत्र तत्रास्यानेकानि निधानकोटीनियुतशतसहस्राणि धरण्याः प्रादुर्भवंति ॥ तेन बोधिसत्त्वचर्यां चरता तावदप्रमेयासंख्येयानि सत्त्वकोटीनियुतशतसहस्राण्यनुत्तरायां सम्यक्संबोधौ प्रतिष्ठापितानि येषां न सुकरं वाक्कर्मणा पर्यंतमधिगंतुं । तावदप्रमेयासंख्येया बुद्धा भगवंतः सत्कृता

[1] निलपको in all MSS [2] उत्सृष्ट स्वात्म° in all MSS [3] व्यावाधाय A. B. C. व्यापाधाय P. [4] संप्रजानभूत P. संप्रजानतोऽभूत् A B C It probably was originally एवं च संप्रजानोऽभूत्; see Pâli sampajâno [5] न् in all MSS [6] C. reads शीलपारमिताक्षांतिपारमितावीर्यपारमिताध्यानपारमिताप्रज्ञा°. [7] चरत A. चरतः B. चरता C. चरन् P. [8] दा left out in C [9] यः A. B यै C.

गुरुकृता मानिताः पूजिताश्चीवरपिंडपात्रशयनासनग्लानप्रत्यय-भैषज्यपरिष्कारैः[1] सर्वसुखोपधानस्पर्शविहारैः प्रतिपादिताः[2] । यावंतः सत्त्वाः श्रेष्ठिगृहपत्यमात्यक्षत्रियब्राह्मणमहाशालकुलेषु प्रतिष्ठापितास्तेषां न सुकरो वाक्कर्मनिर्देशेन पर्यंतोऽधिगंतुं । एवं जांबूद्वीपेश्वराश्च प्रतिष्ठापिताश्चक्रवर्तित्वे लोकपालत्वे शक्रत्वे सुयामत्वे सुतुषितत्वे सुनिर्मितत्वे वशवर्तित्वे देवराजत्वे महाब्रह्मत्वे च प्रष्ठापिताः । तावदप्रमेयासंख्येया बुद्धा भगवंतः सत्कृता गुरुकृता मानिताः पूजिता धर्मचक्रप्रवर्तनार्थं चाधीष्टा येषां नं सुकरो वाक्कर्मनिर्देशेन पर्यंतोऽधिगंतुं ॥ स एवंरूपं कुशलं समुदानयद्यदस्य बोधिसत्त्वचर्यां चरतोऽप्रमेयासंख्येयाचिंत्यातुल्यामाप्यापरिमाणानभिलाप्यानि कल्पकोटीनियुतशतसहस्राणि सुरभिर्दिव्यातिक्रांतचंदनगंधो मुखात्प्रवाति स्म । सर्वलोमकूपेभ्य उत्पलगंधो वाति स्म । सर्वलोकाभिरूपश्चाभूत्प्रासादिको दर्शनीयः परमशुभवर्णपुष्कलतया समन्वागतः । लक्षणव्यंजनसमलंकृतेनात्मभावेन तस्य सर्वरत्नालंकाराः सर्ववस्त्रचीवराभिनिर्हाराः[5] सर्वपुष्पधूपगंधमाल्यविलेपनछत्रध्वजपताकाभिनिर्हाराः सर्ववाद्यसंगीत्यभिनिर्हाराश्च सर्वलोमकूपेभ्यः पाणितलाभ्यां च निश्चरंति स्म । सर्वान्नपानखाद्यभोज्यलेह्यरसाभिनिर्हाराः सर्वोपभोगपरिभोगाभिनिर्हाराश्च पाणितलाभ्यां प्रस्यंदंतः प्रादुर्भवंति

[1] परिस्कारैः A. B. परिष्कारैः C P [2] Some words seem left out here in all the MSS. [3] मात्य left out in B [4] परमशुभवर्ण A. C. परमसुभपर्ण B परमसुवर्ण P. [5] चीवराभिर्निर्हाराः C [6] रो A B C P.

स्म। इति हि सर्वपरिष्कारवशिताप्राप्तः स आनंद धर्माकरो भिक्षुरभूत्पूर्वं बोधिसत्त्वचर्यां चरन् ॥१०॥

एवमुक्त आयुष्मानानंदो भगवंतमेतदवोचत्। किं पुनर्भगवन्स धर्माकरो भिक्षुर्बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यातीतः परिनिर्वृत उताहोऽनभिसंबुद्धो[1]ऽथ प्रत्युत्पन्नोऽभिसंबुद्ध एतर्हि तिष्ठति ध्रियते यापयति धर्मं च देशयति। भगवानाह। न खलु पुनरानंद स तथागतोऽतीतो नानागतः[2]। अपि त्वेव[3] स[4] तथागतोऽर्हन्सम्यक्संबोधिमभिसंबुद्ध एतर्हि तिष्ठति ध्रियते यापयति धर्मं च देशयति पश्चिमायां दिशीतो कोटीनियुतशतसहस्रतमे च बुद्धक्षेत्रे सुखावत्यां लोकधातावमिताभो नाम तथागतोऽर्हन्सम्यक्संबुद्धोऽपरिमाणैर्बोधिसत्त्वैः परिवृतः पुरस्कृतोऽनंतैः श्रावकैरनंतया बुद्धक्षेत्रसंपदा समन्वागतः ॥११॥

अमिता चास्य प्रभा यस्य[5] न सुकरं प्रमाणपर्यंतमधिगंतुमियंति बुद्धक्षेत्रशतानीयंति बुद्धक्षेत्रसहस्राणीयंति बुद्धक्षेत्रशतसहस्राणीयंति बुद्धक्षेत्रकोटीनीयंति[7] बुद्धक्षेत्रकोटीशतानीयंति बुद्धक्षेत्रकोटीसहस्राणीयंति[8] बुद्धक्षेत्रकोटीशतसहस्राणीयंति बुद्धक्षेत्रकोटीनियुतशतसहस्राणि स्फुरित्वा तिष्ठतीति। अपि तु[9]खलु पुनरानंद संक्षिप्तेन पूर्वस्यां दिशि गंगानदीवालुकोपमानि[10]

[1] संभूतः C संभूत् P [2] तीतानागतः P. ऽतीतानागतः B C [3] त्वेवं B
[4] स left out in A. B [5] प्रभा यस्य left out in B [6] नं P [7] कोटीनियुतानि। इयंति C. P [8] बुद्धक्षेत्रकोटीसहस्राणि। इयंति repeated in P [9] खल्वानंद C P. [10] पालिकासमानि A B

बुद्धक्षेत्रकोटीनियुतशतसहस्राणि तया तस्य भगवतोऽमिताभस्य प्रभया सदा[1] स्फुटानि । एवं दक्षिणपश्चिमोत्तरास्वध ऊर्ध्वं दिग्विदिक्षु चैकैकस्यां दिशि समंताद्गंगानदीवालुकोपमानि[3] [4]यावद्बुद्धक्षेत्रकोटीनियुतशतसहस्राणि तस्य भगवतोऽमिताभस्य प्रभया सदा परिस्फुटानि [5]स्थापयित्वा बुद्धान्भगवतः [6]पूर्वप्रणिधानाधिष्ठानेन ये व्यामप्रभयैकद्विर्त्रिचतुःपंचदशविंशतित्रिंशच्चत्वारिंशत्पंचाशद्योजनप्रभया योजनशतप्रभया योजनसहस्रप्रभया[8] योजनशतसहस्रप्रभया यावदनेकयोजनकोटीनियुतशतसहस्रप्रभया वा लोकं[10] स्फुरित्वा तिष्ठंति । नास्त्यानंदोपमोपन्यासो येन शक्यं तस्यामिताभस्य तथागतस्य प्रभायाः प्रमाणमुद्ग्रहीतुं । तदनेनानंद पर्यायेण स तथागतोऽमिताभ इत्युच्यतेऽमितप्रभोऽमितप्रभासोऽसमाप्तप्रभोऽसंगतप्रभः प्रभाशिखोत्सृष्टप्रभः सदिव्यमणिप्रभोऽप्रतिहतरश्मिरागप्रभो राजनीयप्रभः प्रेमणीयप्रभः प्रमोदनीयप्रभः संगमनीयप्रभ उपोषणीयप्रभो निबंधनीयप्रभोऽतिवीर्यप्रभोऽतुल्यप्रभोऽभिभूयनरेंद्रामून्नयेंद्रप्रभः[11][12] श्रांतसंचयेंदुसूर्यजिह्मीकरणप्रभोऽभिभूयलोकपालशक्रब्रह्मशुद्धावासमहे-[13]

[1] सदा left out in A B [2] पश्चिमोत्तरोश्चोध ऊर्ध्वमनुविदिक्षु A. पश्चिमोऽनुत्तरोध ऊर्ध्वं दिग्विदिक्षु B पश्चिमोत्तरासु दिक्षध ऊर्ध्वमनुविदिक्षु C. पश्चिमोत्तरासु दिक्षु सधऊर्ध्वमनुविदिक्षु P [3] वालिकासमानि A B C P [4] याद्बुद्ध° A. यद्बुद्ध P. [5] यित्वा बुद्धां A B C. स्थापयित्वा बुद्धा P. [6] पूजा added in C P before पूर्व [7] तृ A B C P. [8] This passage is repeated in C. [9] या left out in A. [10] लावल्लो A. यावल्लो B या ल्लो C. या ल्लो P [11] मून्न B C P. मुन्न A. Is it meant for नरेंद्राभून्नयेंद्र? For the series of indras, see Lal. Vist p 564 [12] य P [13] श्रान्तसचयेन्दुन्सूर्यजिह्मीकरणप्रभो A श्रान्तसचयेन्दुसूर्यजिह्मी° B श्रान्तसंचयेन्दुत्सूर्यजिह्मी° C श्रांतसंचयेन्दुनसूर्यजिह्मी° P

स्वरसर्वदेवजिह्मीकरणप्रभ इत्युच्यते ॥ सा चायंप्रभा विमला विपुला कायसुखसंजननी चित्तौद्बिल्यंकरणी देवासुरनागयक्षगंधर्वगरुडमहोरगकिंनरमनुष्यामनुष्याणां[4] प्रीतिप्रामोद्यसुखकरणी कुशलाशयानां सत्त्वानां[6] कल्यकुशलमिमिखेवर्द्धिप्रामोद्यकरणी येऽन्येष्वप्यनंतापर्यंतेषु बुद्धक्षेत्रेषु। अनेन चानंद पर्यायेण तथागतः परिपूर्णं कल्पं भाषेतस्यामिताभस्य तथागतस्य नाम कर्माणादाय प्रभामारभ्य न च शक्नोति गुणपर्यंतमधिगंतुं तस्याः प्रभायाः तथागतस्य वैशारद्यानुपच्छेदो[8] भवेत्। तत्कस्य हेतोः। उभयमप्येतदानंदाप्रमेयमसंख्येयमचिंत्यापर्यंतं[9] यदिदं तस्य भगवतोऽमिताभस्य तथागतस्य प्रभागुणविभूतिः तथागतस्य चानुत्तरं प्रज्ञाप्रतिभानं ॥१२॥

तस्य खलु पुनरानंदामिताभस्य तथागतस्याप्रमेयः[10] श्रावकसंघो[11] यस्य न सुकरं प्रमाणमुद्ग्रहीतुमियत्यः[13] श्रावककोट्य इयंति श्रावककोटीशतानीयंति श्रावककोटीसहस्राणीयंति श्रावककोटीशतसहस्राणीयंति कंकराणीयंति विंबराणीयंति नयु-

[1] देप left out in B [2] लो P [3] न left out in A [4] मनुष्यमनुष्याना A
[5] म P [6] सत्त्वाना C left out in A B सत्वा P [7] धल्यकुशलमिमिखेषर्द्धि A कल्यकुशलमिमिनेवर्द्धि P कल्यकुशरमिमिखेवर्द्धि B धल्यकुशलमिमिनेवर्द्धि C Not clear, could it be vivarad? [8] वैशारद्योनोपच्छेनो A B C वैशारद्यापच्छेदो P
[9] °पित्यापर्यंत A B C P चित्यमपर्यंत? [10] °मया A B P °मया B [11] सघा B
[12] इयन्या A इयन्त्य C P इयत्य श्रावककोट्य left out in B [13] इयति श्रावककोटीशतसहस्राणि left out in P [14] विम्बराणि A B निवराणि C विम्बलानि P See Lal V st p 168

तानीयंत्ययुतानीयंत्यक्षोभ्याणीयंतो विवाहा इयंति स्रोतांसीयंत्योजांसीयंत्यप्रमेयाणीयंत्यसंख्येयानीयंत्य गण्यानीयंत्यतुल्यानीयंत्यचिंत्यानीति। तद्यथानंद[3]भिक्षुर्मौद्गल्यायन ऋद्धिवशिताप्राप्तः स त्रिसाहस्रमहासाहस्रलोकधातौ यावंति ताराकपाणि तानि सर्वाण्येकरात्रिंदिने नागरेण गणयेत्[4] एवंरूपाणां चर्द्धिमतां कोटीनियुतशतसहस्रं भवेत् ते च[5] वर्षकोटीनियुतशतसहस्रमनन्यकर्मणामिताभस्य[6] तथागतस्य प्रथमश्रावकसंनिपातं गणयेयुः एभिर्गणयद्भिः शततमोऽपि भागो न गणितो भवेत्सहस्रतमोऽपि शतसहस्रतमोऽपि यावत्कलामप्युपमामप्युपनिशामपि[7] न गणितो भवेत् ॥ तद्यथानंद महासमुद्राच्चतुराशीतियोजनसहस्राण्यावेधेन तिर्यगप्रमेयात्कश्चिदेव पुरुषः शतधा भिन्नया वालाग्रकोट्यैकमुदकविंदुमभ्युत्क्षिपेत् तत्किं मन्यस आनंद कतमोऽच बहुतरः यो वा शतधा भिन्नया वालाग्रकोट्याभ्युत्क्षिप्त[9] एक उदकविंदुर्यो वा[10]महासमुद्रेऽप्स्कंधोऽवशिष्ट इति। आनंद आह। योजनसहस्रमपि तावद्भगवन्महासमुद्रस्य परीत्तं भवेत्किमंग पुनः शतधा भिन्नया वालाग्रकोट्योत्क्षिप्त एक उदकविंदुः।भगवानाह।

[1] इयत्यःनाम्ना A B P , left out in C [2] इयत्यप्रमेयाणि left out in B [3] मौद्गल्यायनो भिक्षुः P [4] नगरेण गणयेत् A नगरेण गणेत् B नगरे न गणयेत् C नगरे न गण्येत् P [5] तेन A B C P [6] कर्मणाऽमिताभस्य A B C. कर्मनामिताभस्य P [7] उपनिशामपि A B C P Cf the Vagrakkhedikâ, p 35, l 10, p 42 l. 7 (upanishadam) [8] यथेन तिर्यगप्रमेयान् A B C येधेन तिर्यग् प्रमेयात् P [9] भूत्क्षिप्त A B C भूत् ॥ क्षिप्त P [10] महासमुद्रऽपस्कन्धोऽवशिष्ट A महासमुद्र अपस्कधोऽवशिष्ट B महासमुद्र ऽप्स्कन्धोऽवशिष्ट C. महासमुद्र उस्कन्दो वशिष्ट P

तद्यथा स एकविंदुरियंततः[1] स प्रथमसन्निपातोऽभूत्। तैर्मौद्गल्यायनसदृशैर्भिक्षुभिर्गणयद्भिस्तेन वर्षकोटीनियुतशतसहस्रेण गणितं भवेत् यथा महासमुद्रेऽप्स्कंधोऽवशिष्ट एवमगणितं द्रष्टव्यं। कः पुनर्वादो द्वितीयतृतीयादीनां श्रावकसंनिपातानां। एवमनंतापर्यंतस्तस्य भगवतः श्रावकसंघो योऽप्रमेयासंख्येय[2] इत्येव संख्यां गच्छति ॥१३॥

अपरिमितं चानंद तस्य भगवतोऽमिताभस्य तथागतस्यायुःप्रमाणं यस्य न[3] सुकरं प्रमाणमधिगंतुमियंति वा कल्पशतानीयंति वा कल्पसहस्राणीयंति वा कल्पशतसहस्राणीयत्यो वा कल्पकोट्य इयंति वा कल्पकोटीशतानीयंति वा कल्पकोटीसहस्राणीयंति वा कल्पकोटीशतसहस्राणीयंति वा कल्पकोटीनियुतशतसहस्राणीति। अथ तर्ह्यानंदापरिमितमेव तस्य भगवत आयुःप्रमाणपर्यंतं। तेन स तथागतोऽमितायुरित्युच्यते। यथा चानंदेह लोकधातौ कल्पगणनाप्रज्ञप्तिसंकेतस्तथा[4] सांप्रतं दशकल्पास्तस्य भगवतोऽमितायुषस्तथागतस्योत्पन्नस्यानुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य ॥१४॥

तस्य खलु पुनरानंद भगवतोऽमिताभस्य सुखावती नाम लोकधातुर्ऋद्धा च स्फीता च क्षेमा च सुभिक्षा च रमणीया च

[1] इयततः A B C P   इयन्तम्. or इयान्तत. for ईयंततः?   [2] °संख्येया A C °संख्येय P. °सख्ये B   [3] न is given here in C only, it is put in between प्रमाणं and यस्य in B, and it is left out in A P   [4] P has सा before तथा

बहुदेवमनुष्याकीर्णा च। तत्र खल्वानंद लोकधातौ न निरयाः संति न तिर्यग्योनिर्न प्रेतविषयो नासुराः काया नाक्षणोपपत्तयाः। न च तानि रत्नानि लोके प्रचरंति यानि सुखावत्यां लोकधातौ विद्यंते ॥१५॥

सा खल्वानंद सुखावती लोकधातुः सुरभिनानागंधसमीरिता नानापुष्पफलसमृद्धा रत्नवृक्षसमलंकृता तथागताभिनिर्मितमनोज्ञस्वरनानाद्विजसंघनिषेविता। ते चानंद रत्नवृक्षा नानावर्णा अनेकवर्णा अनेकशतसहस्रवर्णाः। संति तत्र रत्नवृक्षाः सुवर्णवर्णाः सुवर्णमयाः। संति रूप्यवर्णा रूप्यमयाः[1]। संति वैडूर्यवर्णा वैडूर्यमयाः। संति स्फटिकवर्णाः स्फटिकमयाः। संति मुसारगल्ववर्णा मुसारगल्वमयाः। संति लोहितमुक्तावर्णा लोहितमुक्तामयाः। संत्यश्मगर्भवर्णा अश्मगर्भमयाः॥ संति केचिद्द्वयो रत्नयोः सुवर्णस्य रूप्यस्य च। [2]संति त्रयाणां रत्नानां सुवर्णस्य रूप्यस्य वैडूर्यस्य च। संति चतुर्णां रत्नानां सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य च। संति पंचानां रत्नानां[3] सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य च। संति षण्णां रत्नानां सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य लोहितमुक्तायाश्च। संति सप्तानां रत्नानां सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य लोहितमुक्ताया अश्मगर्भस्य च

[1] The MSS constantly vary between सुवर्ण and सौवर्ण, रूप्य and रौप्य, but on the whole सुवर्ण and रूप्य preponderate [2] From संति त्रयाणां to रूप्यस्य left out in A B C [3] रत्नानां left out in A B

सप्तमस्य[1] ॥ तत्रानंद सुवर्णमयानां वृक्षाणां[2] सुवर्णमयानि मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि रूप्यमयाणि। रूप्यमयाणां वृक्षाणां रूप्यमयाण्येव मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि वैडूर्यमयाणि । वैडूर्यमयाणां वृक्षाणां वैडूर्यमयाणि मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि स्फटिकमयानि । स्फटिकमयानां वृक्षाणां स्फटिकमयान्येव मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि च मुसारगल्वमयानि। मुसारगल्वमयानां वृक्षाणां मुसारगल्वमयान्येव मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि च लोहितमुक्तामयानि। लोहितमुक्तामयानां[3] वृक्षाणां लोहितमुक्तामयान्येव मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि [4]चाश्मगर्भमयाणि। अश्मगर्भमयाणां वृक्षाणामश्मगर्भमयाण्येव मूलस्कंधविटपशाखापत्त्रपुष्पाणि फलानि च सुवर्णमयानि ॥ केषांचिदानंद वृक्षाणां[5] सुवर्णमयानि मूलानि रूप्यमयाः स्कंधा वैडूर्यमया विटपाः स्फटिकमयाः शाखा मुसारगल्वमयानि पत्त्राणि लोहितमुक्तामयानि पुष्पाण्यश्मगर्भमयाणि फलानि। केषांचिदानंद वृक्षाणां रूप्यमयाणि मूलानि वैडूर्यमयाः स्कंधाः स्फटिकमया विटपा मुसारगल्वमयाः शाखा लोहितमुक्तामयानि पत्त्राण्यश्मगर्भमयाणि पुष्पाणि सुवर्णमयानि फलानि। केषां-

[1] Instead of सप्तमस्य C. has संति. [2] Deest in A C P For the sake of uniformity it would have been easy to insert एव and च throughout, but they have been printed only where some of the MSS gave them. [3] Deest in A B C [4] From चाश्मगर्भ° to फलानि left out in P. [5] P has सुवर्णमयानां between वृक्षाणां and सुवर्णमयानि.

चिदानंद वृक्षाणां वैडूर्यमयाणि मूलानि स्फटिकमयाः स्कंधा मुसारगल्वमया विटपा लोहितमुक्तामयाः शाखा अश्मगर्भमयाणि पत्त्राणि सुवर्णमयानि पुष्पाणि रूप्यमयाणि फलानि। केषांचिदानंद वृक्षाणां स्फटिकमयानि मूलानि मुसारगल्वमयाः स्कंधा लोहितमुक्तामया विटपा अश्मगर्भमयाः शाखाः सुवर्णमयानि पत्त्राणि रूप्यमयाणि पुष्पाणि वैडूर्यमयाणि फलानि। केषांचिदानंद वृक्षाणां मुसारगल्वमयानि मूलानि[1] लोहितमुक्तामयाः स्कंधा अश्मगर्भमया विटपाः सुवर्णमयाः शाखा रूप्यमयाणि पत्त्राणि वैडूर्यमयाणि पुष्पाणि स्फटिकमयानि फलानि। केषांचिदानंद वृक्षाणां लोहितमुक्तामयानि मूलान्यश्मगर्भमयाः [2]स्कंधाः सुवर्णमया विटपा रूप्यमयाः शाखा वैडूर्यमयाणि पत्त्राणि स्फटिकमयानि पुष्पाणि मुसारगल्वमयानि फलानि। केषांचिदानंद वृक्षाणामश्मगर्भमयाणि मूलानि सुवर्णमयाः स्कंधा रूप्यमया विटपा वैडूर्यमयाः शाखाः स्फटिकमयानि पत्त्राणि मुसारगल्वमयानि पुष्पाणि लोहितमुक्तामयानि फलानि ॥ केषांचिदानंद वृक्षाणां सप्तरत्नमयानि मूलानि[3] सप्तरत्नमयाः स्कंधाः सप्तरत्नमया विटपाः सप्तरत्नमयाः शाखाः सप्तरत्नमयानि पत्त्राणि सप्तरत्नमयानि पुष्पाणि सप्तरत्नमयानि फलानि ॥ सर्वेषां चानंद तेषां वृक्षाणां मूलस्कंधविटपशाखापत्त्रपुष्पफलानि सुखसंस्पर्शानि सुगंधीनि। वातेन प्रेरितेन[4] च

[1] मूलानि deest in A B [2] From स्कंधा to अश्मगर्भमया deest in B [3] सप्तरत्नमयानि मूलानि deest in P [4] धातेन रितेन A C P वातेन प्रेरितेन B. प्रेरितानां?

तेषां वल्गुमनोज्ञघोषो निश्चरत्यसेचनकोऽप्रतिकूलः श्रवणाय। एवंरूपैरानंद [1]सप्तरत्नमयैर्वृक्षैः संततं तद्बुद्धक्षेत्रं समंताच्च कदलीस्कंधैः सप्तरत्नमयै रत्नतालपंक्तिभिश्चानुपरिक्षिप्तं सर्वतश्च हेमजालप्रतिच्छन्नं समंततश्च सर्वरत्नमयैः पद्मैः संछन्नं ॥ संति तत्र पद्मान्यर्धयोजनप्रमाणानि। संति योजनप्रमाणानि संति[2] द्वित्रिचतुःपंचयोजनप्रमाणानि संति यावद्दशयोजनप्रमाणानि। सर्वतश्च रत्नपद्मात्षट्त्रिंशद्रश्मिकोटीशतसहस्राणि निश्चरंति। सर्वतश्च रश्मिमुखात्षट्त्रिंशद्बुद्धकोटीशतसहस्राणि निश्चरंति सुवर्णवर्णैः कायैर्द्वात्रिंशन्महापुरुषलक्षणधरैर्यानि पूर्वस्यां दिश्यप्रमेयासंख्येयासु लोकधातुषु गत्वा सत्त्वेभ्यो धर्मं देशयंति। [5]एवं दक्षिणपश्चिमोत्तरासु दिक्ष्वध ऊर्ध्वमनुविदिक्षु गतावरणे लोकेऽप्रमेयासंख्येयाँल्लोकधातून्गतिंगत्वा[6] सत्त्वेभ्यो धर्मं देशयंति ॥१६॥

तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे सर्वशः कालपर्वता न संति सर्वतो रत्नपर्वताः सर्वशः सुमेरवः पर्वतराजाः[7] सर्वशश्चक्रवाडा महाचक्रवाडाः[8] पर्वतराजाः[9]। समंताच्च तद्बुद्धक्षेत्रं समं रमणीयं पाणितलजातं नानाविधरत्नमणिचितभूमिभागं[10] ॥ एवमुक्त

[1] From सप्तरत्न° to पद्मान्यर्धयोजन deest in B [2] योजनप्रमाणानि संति deest in A. B. P [3] शत deest in C. P. [4] शत deest in A. B C P. The Chinese translation presupposes शत, giving the numbers as 36—100—1000—1,000,000 [5] Cf. Vagrakkhedikâ, p 21, l 14 [6] Cf the smaller Sukhâvatîvyûha, 5th paragraph: कोटिशतसहस्रं बुद्धानां वंदंत्यन्याँल्लोकधातून्गत्वा। [7] पर्वतराजानः P [8] महाचक्रवाडाः deest in A B [9] पर्वतराजानः A C P [10] मणिचितभूमि A. °चितभूमि B मणिचितभूमि C मतिचितभूमि P

आयुष्मानानंदो भगवंतमेतदवोचत्। ये च पुनस्ते भगवंश्चातुर्महाराजकायिका देवाः सुमेरुपार्श्वनिवासिनस्त्रायस्त्रिंशा[1] वा[2] सुमेरुमूर्ध्नि निवासिनस्ते कुत्र प्रतिष्ठिताः। भगवानाह। तत्किं मन्यस आनंद ये त इह सुमेरोः पर्वतराजस्योपरि यामा देवास्तुषिता वा[3] निर्माणरतयो वा[4] परनिर्मितवशवर्तिनो वा[5] ब्रह्मकायिका वा[5] ब्रह्मपुरोहिता वा[5] महाब्रह्मणो वा[5] यावदकनिष्ठा वा[6] कुत्र ते प्रतिष्ठिता इति। आनंद[7] आह। अचिंत्यो भगवन्कर्मणां[8] विपाकः कर्माभिसंस्कारः। भगवानाह। लब्धस्त्वयानंदेहाचिंत्यः कर्मणां[9] विपाकः कर्माभिसंस्कारो न बुद्धानां भगवतामचिंत्यं बुद्धाधिष्ठानं कृतपुण्यानां च सत्त्वानामवरोपितकुशलमूलानां तथाचिंत्या पुण्या विभूतिः। आनंद[10] आह। न मेऽत्र भगवन्काचित्कांक्षा वा विमतिर्वा विचिकित्सा वा। अपि तु खल्वहमनागतानां सत्त्वानां कांक्षाविमतिविचिकित्सानिर्घाताय तथागतमेतमर्थं परिपृच्छामि। भगवानाह। साधु साध्वानंदैवं ते करणीयं ॥१७॥

तस्यां खल्वानंद सुखावत्यां लोकधातौ नानाप्रकारा नद्यः प्रचरंति। संति तत्र महानद्यो योजनविस्ताराः। संति यावद्विंशतित्रिंशच्चत्वारिंशत्पंचाशद्योजनविस्तारा यावद्द्वादशयोजनावेधाः[11] सर्वाश्च ता नद्यः सुखवाहिन्यो नानासुरभिगंधवारिवाहिन्यो

[1] त्रायत्रिंशा A B C त्रायस्त्रिंसा P [2] देवाः B [3] देवा A B C [4] देवा° B C
[5] देवा B [6] देवा° A B C [7] आनद deest in P [8] कर्मेना A B P कर्मणा C
[9] कर्मेना B P [10] आनद deest in P [11] नोद्वेधा A C न ऊर्द्धधाः B नावेधाः P नोद्वेलाः ?

नानारत्नलुडितपुष्पसंघातवाहिन्यो नानामधुरस्वरनिर्घोषाः । तासां चानंद कोटीशतसहस्रांगसंप्रयुक्तस्य दिव्यसंगीतिसंमूर्छ्छितस्य[1] तूर्यस्य कुशलैः संप्रवादितस्य तावन्मनोज्ञघोषो निश्चरति[2] यथारूपस्तासां महानदीनां निर्घोषो निश्चरति गंभीरोऽज्ञेयोऽविज्ञेयोऽनेलः[3] कर्णसुखो हृदयंगमः प्रेमणीयो वल्गुर्मनोज्ञोऽसेचनकोऽप्रतिकूलः श्रवणायानित्यं[4] शांतमनात्मेति सुखश्रवणीयो यस्तेषां सत्त्वानां श्रोत्रेंद्रियाभासमागच्छति ॥ तासां खलु पुनरानंद महानदीनामुभयतस्तीराणि नानागंधरत्नवृक्षैः[5]संततानि येभ्यो नानाशाखापत्रपुष्पमंजर्योऽवलंबंते[6] । तत्र ये सत्त्वास्तेषु नदीतीरेष्वाकांक्षंति दिव्याभिरामरमणीयां रतिक्रीडां चानुभवितुं तेषां तत्र नदीप्रवतीर्णानामाकांक्षतां गुल्फमात्रं वारि संतिष्ठते । आकांक्षतां जानुमात्रं कटिमात्रं कक्षमात्रमाकांक्षतां कर्णमात्रं वारि संतिष्ठते दिव्याश्च रतयः प्रादुर्भवंति । तत्र ये सत्त्वा आकांक्षंति शीतं वारि भवत्विति तेषां शीतं वारि भवति । य आकांक्षंत्युष्णं भवत्विति तेषामुष्णं भवति । य आकांक्षंति शीतोष्णं भवत्विति तेषां शीतोष्णमेव तद्वारि भवत्यनुसुखं । ताश्च महानद्यो दिव्यतमालपत्त्रागरुकालानुसारितगरोरगसारचंदनवरगंधवासितवारिपरिपूर्णाः प्रवहंति दिव्योत्पलपद्मकुमुदपुंडरीक-

[1] समुर्च्छितस्य A C P समुच्छितस्य B.   [2] Cf the small Sukhâvatîvyûha, 7th paragraph, where we read. तद्यथापि नाम शारिपुत्र कोटिशतसहस्रांगिकस्य दिव्यस्य तूर्यस्य चार्य. सम्प्रवादितस्य वल्गुर्मनोज्ञः शब्दो निश्चरति ।   [3] ऽनेलः A B ऽनलः C. घनल P, ■ it for घनेडः?   [4] घनित्य B घचिंत्य P.   [5] सम B   [6] ऽप्यलंबन्ते A C. ऽपरवन्ते B पलायन्ते P   [7] पत्रा left out in A B   [8] ग deest in B

सौगंधिकादिपुष्पसंछन्ना हंससारसक्रौंचचक्रवाककारंडकशुकशारिककोकिलकुणालकलविंकमयूरादिमनोज्ञस्वरास्तथागताभिनिर्मितपक्षिसंघनिषेवितपुलिना धातुराष्ट्रोपशोभिताः[2]सुपतीर्था विकर्दमाः सुवर्णवालुकासंकीर्णाः। तत्र यदा ते सत्त्वा आकांक्षंति कीदृशा अस्माकमभिप्रायाः परिपूर्यंतामिति तदा तेषां तादृशा एवाभिप्राया[3] परिपूर्यंते। यश्चासावानंद तस्य[4] वारिणो निर्घोषः स मनोज्ञो[5] निश्चरति येन सर्वावत्तं बुद्धक्षेत्रमभिज्ञाप्यते। ये च सत्त्वा नदीतीरेषु स्थिता आकांक्षंति मास्माकमयं शब्दः श्रोत्रेंद्रियावभासमागच्छत्विति तेषां न दिव्यस्यापि श्रोत्रेंद्रियस्यावभासमागच्छति।[7] यश्च यथारूपं[8] शब्दमाकांक्षति श्रोतुं स तथारूपमेव मनोज्ञं शब्दं शृणोति। तद्यथा। बुद्धशब्दं धर्मशब्दं संघशब्दं

[1] ता A B. त C. P. [2] सुपती A. सुपति B सुपती C P. Cf. the small Sukhâvatîvyûha, 4th paragraph, where we read: अष्टांगोपेतवारिपरिपूर्णाः समतीर्थकाः काकपेया सुवर्णवालुकाः संस्तृताः। Is सुप, easy to drink? [3] After अभिप्राया all the MSS add धर्माः. [4] यश्चासायातद्स्य A. B यश्चासोयातंदस्य C. यश्चासावानन्द तस्य P. [5] वारिणो निर्घोषः स मनोज्ञो A. C. °स मनोज्ञे B. वारिणो निर्घोषः स मनोज्ञा P [6] सर्वायंतत C. सर्वावंत A. B P.

[7] A. मा स्मयमयं शब्दं श्रोत्रेंद्रियावभासमागच्छति। तेषां स दिव्यं वालि श्रोत्रेंद्रिया स्याभासमागच्छति॥
B मास्यमयशब्द श्रोत्रेंद्रियावभासमागच्छति॥ तेषां म दिव्यं वारि श्रोत्रेंद्रियास्यभासमागच्छति॥
C. मा स्यामयं शब्दं श्रोत्रेंद्रियारभासमागच्छति। तेषां म दिव्यं वारि श्रोत्रेंद्रिया स्याभासमागच्छति॥
P मा स्यमयं शब्दः श्रोतेंद्रियाभासमागच्छत्विति। तेषां स दिव्यं वारि श्रोतेंद्रियस्या सभासमागच्छति॥
The various readings of the four MSS., as here put together, will give some idea of the difficulty of restoring the text. We can gather from Bodhiruki's Chinese translation that what he discovered in the text before him was that those who did not wish to hear the sound of the river, need not hear it, even if they were possessed of the so-called heavenly hearing which enables a man to hear everything. With the help of this hint the text has been restored conjecturally, though with sufficient certainty. [8] यथाक्रमं P

पारमिताशब्दं भूमिशब्दं[1] बलशब्दं वैशारद्यशब्दमावेणिकबुद्धधर्मशब्दं प्रतिसंविच्छब्दं शून्यतानिमित्ताप्रणिहितानभिसंस्काराजातानुत्पादाभावनिरोधशब्दं शांतप्रशांतोपशांतं[2] महामैत्रीमहाकरुणामहामुदितांमहोपेक्षाशब्दमनुत्पत्तिकधर्मक्षांत्यभिषेकभूमिप्रतिलंभशब्दं[4]। श्रुत्वोदारप्रीतिप्रामोद्यं प्रतिलभते विवेकसहगतं विरागसहगतं शांतसहगतं निरोधसहगतं धर्मसहगतं बोधिपरिनिष्पत्तिकुशलमूलसहगतं च ॥ सर्वशश्चानंद सुखावत्यां लोकधातावकुशलशब्दो नास्ति सर्वशो नीवरणशब्दो[5] नास्ति सर्वशोऽपायदुर्गतिविनिपातशब्दो नास्ति सर्वशो दुःखशब्दो नास्ति। अदुःखासुखवेदनाशब्दोऽपि तावदानंद तत्र नास्ति कुतः पुनर्दुःखशब्दो[6] भविष्यति। तदनेनानंद पर्यायेण सा लोकधातुः सुखावतीत्युच्यते संक्षिप्तेन न पुनर्विस्तरेण। कल्पोऽप्यानंद परिक्षयं गच्छेत्सुखावत्या लोकधातोः सुखकारणेषु परिकीर्त्यमानेषु न त्वेव शक्यं तेषां सुखकारणानां पर्यंतमधिगंतुं ॥१८॥

तस्यां खलु पुनरानंद सुखावत्यां लोकधातौ ये सत्त्वाः प्रत्याजाताः प्रत्याजनिष्यंते[7] सर्वे त एवंरूपेण वर्णेन बलेन[8] स्थामारोहपरिणाहेनाधिपत्येन पुण्यसंचयेनातिष्णाभिवर्स्त्राभरणोद्यानविमानकूटागारपरिभोगैरेवंरूपशब्दगंधरसस्पर्शपरिभो-

[1] भूमिशब्दं left out in A B C [2] प्रशांतप्रशांतो A. C P. प्रशांतप्रशांतो B. [3] मुदिता left out in B. [4] शांतं शृणोति न एवं P. [5] नीवरण, see Childers, Pāli Dict., p. 293b [6] पुन दुःखं दुःखशब्दो A. पुनर्दुःखं शब्दो B. पुनर्दुःख दुःखशब्दो C. पुनः दुःखशब्दो P. [7] A adds तेषां, B. C. P. तेषां. [8] वर्णेन B. Deest in P [9] यथातिष्णाभिर्वस्त्रा A. B C. येन यातिष्णाभिः वस्त्रा P. नहिभिर्व?

गैरेवंरूपैश्च सर्वैरपि भोगपरिभोगैः समन्वागताः तद्यथापि[2] नाम देवाः परनिर्मितवशवर्तिनः ॥ न खलु पुनरानंद सुखावत्यां लोकधातौ सत्त्वा औदारिकयूषफाणीकाराहारमाहरंति अपि तु खलु पुनर्यथारूपमेवाहारमाकांक्षंति तथारूपमाहृतमेव संजानंति[5] प्रीणितकायाश्च भवंति प्रीणितमानाः[6]। न तेषां भूयः काये प्रक्षेपः करणीयः ॥ ते प्रीणितकायास्तथारूपाणि गंधजातान्याकांक्षंति वेदृशैरेव[7] गंधजातैर्दिव्यैस्तद्बुद्धक्षेत्रं सर्वमेव निर्धूपितं भवति । तत्र यस्तं गंधमाघ्रातुकामो भवति तस्य सर्वशो गंधर्वराज्ञो[8] वासना नसमुदाचरति । एवं ये[9] यथारूपाणि गंधमाल्यविलेपनचूर्णचीवरछत्रध्वजपताकातूर्याण्याकांक्षंति तेषां तथारूपैश्च तैः सर्वं तद्बुद्धक्षेत्रं परिस्फुटं भवति । चीवराण्याकांक्षंति नानावर्णान्यनेकशतसहस्रवर्णानि तेषां तादृशैरेव चीवररत्नैः सर्वं तद्बुद्धक्षेत्रं परिस्फुटं भवति । प्रावृतमेव चात्मानं संजानंति । ते यथारूपाण्याभरणान्याकांक्षंति तद्यथा शीर्षाभरणानि वा कर्णाभरणानि वा ग्रीवाभरणानि वा हस्तपादाभरणानि [10]वा यदिदं मुकुटानि कुंडलानि कटककेयूराणि वत्सहारा रुचकहारा कर्णिका मुद्रिकाः स्वर्णसूत्राणि मेखलाः [11]स्वर्णसूत्रा-

[1] भोगपरि deest in C. [2] व्यपि P. [3] औदारिजुकवती A. C. औदारियुक्तवतो B. औदारिजुकवति P. [4] काराहारा A. B. C काराहरा P See Lal Vist, p 331, ll 5-7. [5] संजानंते A B. C. [6] माना: A B C. P मनसः? [7] वेदशैलेच P. वेदशैरेष A B C [8] गंधर्वराज्ञा A B P. गंधं च राज्ञा C. [9] ये न A B [10] का यदिदं A. C वा यदिदं B या का यदिदं P. [11] स्वर्णसूत्राणि जालानि A. B C. स्वर्णसूत्रानी कालानि P.

णि जालानि मुक्ताजालानि सर्वरत्नजालानि स्वर्णरत्नकिंकिणीजालानि तथारूपैराभरणैरनेकरत्नशतसहस्रप्रत्युप्तैः स्फुटं तद्बुद्धक्षेत्रं पश्यंति यदिदमाभरणवृक्षावसक्तैस्तैश्चाभरणैरलंकृतमात्मानं संजानंति ॥ ते यादृशं[1] विमानमाकांक्षंति यद्वर्णलिंगसंस्थानं यावदारोहपरिणाहं नानारत्नमयनिर्यूहशतसहस्रसमलंकृतं नानादिव्यपुष्यसंस्तीर्णं चित्रोपधानविन्यस्तपर्यंकं तादृशमेव विमानं तेषां पुरतः प्रादुर्भवति । तेषु मनोनिर्वृत्तेषु विमानेषु सप्तसप्ताप्सरसहस्रपरिवृताः[3] पुरस्कृता विहरंति क्रीडंति रमंते परिचारयंति ॥१९॥

न च तत्र लोकधातौ देवानां वा मनुष्याणां वा नानात्वमस्त्यन्यत्र संवृतिव्यवहारेण देवमनुष्याविति संख्यां गच्छंति ॥ तद्यथानंद राज्ञश्चक्रवर्तिनः पुरतो मनुष्यहीनो मनुष्यप्रेतको[4] न भासते न तपते न विरोचते [5]न च भवति विशारदो न प्रभास्वरः एवमेव देवानां परनिर्मितवशवर्तिनां पुरतः शक्रो देवानामिंद्रो न भासते न तपते न विरोचते यदिदमुद्यानविमानवस्त्राभरणैराधिपत्येनर्द्ध्या वा [6]प्रातिहार्येण वैश्वर्येण वानंद स खलु धर्माभिसमयेन धर्मपरिभोगेण वा । तत्रानंद यथा देवाः परनिर्मितवशवर्तिन एवं सुखावत्यां लोकधातौ मनुष्या द्रष्टव्याः ॥२०॥

[1] यादृश A. P. यावद्दृश B यादृशं C [2] दुःप्य A. दुप्य B C. दुःप्य P.
[3] निर्वृत्ताः A. B C. वृत्ताः P [4] प्रेतको A B. C. P. Bodhiruki gives the transliteration 半 拕 迦 Pân-tho-kiâ, i. e. पंडक, which would be better. [5] From न च भवति to भासते left out in P [6] प्रतिहार्येण A. P. प्रीतिभार्येण B. प्रातिहार्येण C.

तस्यां खलु पुनरानंद सुखावत्यां लोकधातौ पूर्वाह्ण[1]काल-समये प्रत्युपस्थिते[2] समंताच्चतुर्दिशमाकुलाः समाकुला वायवो वांति । तेषां [3]रत्नवृक्षाणां चित्रान्दर्शनीयान्नानावर्णाननेक-वृंतान्नानासुरभिदिव्यगंधपरिवासितान्क्षोभयंति संक्षोभयंतीरयंति समीरयंति यतो बहूनि पुष्पशतानि तस्यां रत्नमय्यां महापृथिव्यां प्रपतंति मनोज्ञगंधानि दर्शनीयानि । तैश्च पुष्पैस्तद्बुद्धक्षेत्रं समंतात्सप्तपौरुषं संस्कृतरूपं भवति । तद्यथापि नाम पुरुषः कुशलः पृथिव्यां पुष्पसंस्तरं संस्तृणुयाद्उभाभ्यां पाणिभ्यां समं रचयेत्सुचित्रं दर्शनीयं एवमेव तद्बुद्धक्षेत्रं तैः पुष्पैर्नानागंधवर्णैः समंतात्सप्तपौरुषं स्फुटं भवति । तानि च पुष्पजातानि मृदूनि काचिलिंदिकसुखसंस्पर्शा[5]न्यौपम्यमात्रेण यानि निक्षिप्ते पादे चतुरंगुलमवनमंति उत्क्षिप्ते पादे चतुरंगुलमेवोन्नमंति ॥ निर्गते पुनः पूर्वाह्ण[6]कालसमये तानि पुष्पाणि निरवशेषमंतर्धीयंते । अथ तद्बुद्धक्षेत्रं विविक्तं रम्यं शुभं भवत्यपरिक्लिष्टैः पूर्वपुष्पैः । ततः पुनरपि समंताच्चतुर्दिशं वायवो वांति ये पूर्ववदभिनवानि पुष्पाण्यभिप्रकिरंति । यथा पूर्वाह्ण[7] एवं मध्याह्नकालसमये संध्यायां रात्र्याः[8] प्रथमे यामे मध्यमे यामे पश्चिमे यामे । तैश्च

[1] पूर्वाह्न A B. C P  [2] प्रत्युत्पस्थिते A P  प्रत्युत्पस्थिते B  प्रत्युपप्रत्युत्पस्थित C.
[3] रत्नवृक्षां चित्रां A C  रत्नवृक्षाणां चित्रां B  रत्नवृक्षानां चित्रां P.  [4] वृक्षान् A C P. वृक्षान् B  वृंत, which has been substituted conjecturally, is generally neuter. The text may have been originally ते च रत्नवृक्षान् and अनेकवर्णान्.  [5] न्योपम्य A B C. नोपम्य P  [6] पूर्वाह्न A B C P  [7] पूर्वाह्णे A B C P  [8] रात्र्याः A C. रात्र्यां B  रात्रौ P

वातैर्वायद्भिर्नानागंधपरिवासितैस्ते सत्त्वाः स्पृष्टाः संत एवं सुखसमर्पिता भवंति तद्यथापि नाम निरोधसमापन्नो भिक्षुः ॥२१॥

तस्मिंश्चानंद बुद्धक्षेत्रे सर्वशोऽग्निसूर्यचंद्रग्रहनक्षत्रताराद्रूपाणां तमोऽंधकारस्य नामधेयप्रज्ञप्तिरपि नास्ति सर्वशो [1]रात्रिं दिवं प्रज्ञप्तिरपि नास्त्यन्यत्र तथागतव्यवहारात् सर्वशश्चारामपरिग्रहसंज्ञा नास्ति ॥२२॥

तस्यां खलु पुनरानंद सुखावत्यां लोकधातौ काले दिव्यगंधोदकमेघा अभिप्रवर्षयंति[2] दिव्यानि सर्ववर्णिकानि कुसुमानि दिव्यानि सप्तरत्नानि दिव्यं चंदनचूर्णं[3] दिव्याश्छत्रध्वजपताका अभिप्रवर्षयंति। दिव्यानि सर्ववर्णिकानि कुसुमानि दिव्यानि वितानानि ध्रियंते दिव्यानि छत्ररत्नानि[4] सर्वाभरणान्याकाशे[5] ध्रियंते दिव्यानि वाद्यानि प्रवाद्यंते दिव्याश्चाप्सरसो नृत्यंति॥२३॥

तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे ये सत्त्वा उपपन्ना उत्पद्यंत उत्पत्स्यंते[6] सर्वे ते नियताः सम्यक्त्वे यावन्निर्वाणं[7]। तत्कस्य हेतोः। नास्ति तत्र द्वयो राश्योर्व्यवस्थानं प्रज्ञप्तिर्वा यदिदमनियतस्य वा मिथ्यात्वनियतस्य वा। तदनेनाप्यानंद पर्यायेण सा लोकधातुः सुखावतीत्युच्यते संक्षिप्तेन न पुनर्विस्तरेण। कल्पोऽप्यानंद परिक्षीयेत सुखावत्यां लोकधातौ सुखकारणेषु परि-

[1] रात्रिंदिवं P. [2] अभिप्रवर्षंति P. अभिप्रवर्षिन्ति C. [3] दिव्यचन्दनचूर्णे A. B. दिव्यं चन्दनचूर्णं C. P. [4] छत्ररत्नाणि A. C रत्नछत्रानि P. [5] सर्वाभरणाण्याकाशे A. C. सर्वाभरणानि आकाशे B. सर्वाभरणान्यकाशे P. [6] उत्पत्स्यंते left out in B. P. [7] र्वाणे A. B C. र्वाणं P.

कीर्त्यमानेषु न च तेषां सुखकारणानां शक्यं पर्यंतमधिगंतुं ॥२४॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा[1] अभाषत।

सर्वेऽपि सत्त्वाः सुखिता भवेयुर्।
विशुद्धज्ञानाः परमार्थकोविदाः।
ते कल्पकोटीमथ वापि चोत्तरिं।
सुखावतीवर्णं प्रकाशयेयुः ॥१॥
क्षये कल्पकोटी वज्रे सुराश्च[2]।
सुखावतीये न च वर्णसारुः[3]।
क्षयं न गच्छेत्प्रतिभा च तेषां[4]।
प्रकाशयंतान तु[5] वर्ण नानां[6] ॥२॥
ये लोकधातू [7]परमाणुसादृशां[8]।
च्छिद्येय भिद्येय रजश्च[9] कुर्यात्।

[1] मा गाथा A. B  मां गाथा C.  मा गाथां P  [2] क्षयकल्पकोटीवजे सुराश्च A. क्षयकल्पकोटीवज्रे सुराश्च B. क्षयकल्पकोटीव्रजे सुराश्च C. ये कल्पकोटीव्रजे सुराश्च P. If we want to restore the metre, we might read क्षयं व्रजेत्कल्पकोटी सुराश्च, though the short o would be irregular; or, allowing still greater metrical license, we might conjecture क्षये त्कल्पकोटी वज्रासनं च, i. e. 'A kalpakoṭi may perish and the diamond seat,' using kshaye for kshayet as one syllable, and वज्र as trisyllabic.  [3] सुरुः A. C. P.  मारुः B. Is मारुः meant for सारु, i. e. साधु, or is it meant for चारुः or जयुः?  [4] See Lal. Vist p. 572, l. 10.  [5] तु deest in B.  [6] वर्ण नानां, either वर्ण नाना or perhaps वर्णमालां.  [7] From परमाणु to लोकधातु left out in P  [8] For सादृशा, see Childers' Pāli Dict p. 411, col. 2, for paramâsuragas, Lal. Vist p. 171, l. 13  [9] रजश्च A. B. P  रजांश्च C

अतो बहू उत्तरि लोकधातु।
पूरेत दानं रतनाहि[1] दद्यात् ॥३॥
नैता कलापि[2] उपमापि तस्य।
पुण्यस्य[3] भोंती[4] पृथुलोकधातवः[5]।
ये[6] लोकधातूय सुखावतीये।
श्रुत्वेव नामं भवतीह पुण्यं ॥४॥
ततो बहू पुण्य[7] भवेत तेषां[8]।
ये श्रद्दते[9] जिनवचनं[10] सप्रज्ञाः।
श्रद्धा हि मूलं जगतस्य[11] प्राप्तये[12]।
तस्माद्धि[13] श्रुत्वा विचितिं[14] विनोदयेदिति ॥५॥

एवमप्रमेयगुणवर्णांनंद[15] सुखावती लोकधातुः[16] ॥२५॥

तस्य खलु पुनरानंद भगवतो[17]ऽमिताभस्य तथागतस्य[18] दशसु दिक्ष्वेकैकस्यां दिशि गंगानदीवालुकासमेषु बुद्धक्षेत्रेषु गंगानदीवालुकासमा बुद्धा भगवंतो नामधेयं परिकीर्तयंते वर्णं भाषंते

[1] पुरत्नदानं रत्नो A पुरं तदानं रत्ना B पूरेत्तदान न तनो C पूरेत्तदानं रतनो P
[2] कलापि A B P कल्पापि C; meant for कलापी. [3] पुण्यस्य B, deest in P
[4] भोन्ती A C भोन्ति B P [5] धातुषः B धातवेः C [6] ये A B C P, one expects यं or यत् [7] पुण्यं C [8] भवेत् तेषां A भवेत तेषां B P भवेत् । तेषां C भवेच्च? [9] श्रधये A श्रद्दधे B C P. [10] जिनवचन A B जिनवन C. जिनवल P.
[11] स deest in P [12] प्राप्तये A. C प्राप्तयें B. प्राप्त ॥ ये P [13] तस्माधि A तस्माद्दि B C. तस्मादि P [14] चितिं A C. चि B चिति P [15] वर्णमा A B C वर्णं चा P. [16] लोकधातो A B C [17] भगवतो left out in A B [18] तथागतस्य left out in A B C

यशः प्रकाशयंति गुणमुदीरयंति। तत्कस्य हेतोः। ये केचित्सत्त्वास्तस्य भगवतोऽमिताभस्य नामधेयं शृखंति श्रुत्वा चांतश एकचित्तोत्पादमप्यध्याशयेन प्रसादसहगतेन चित्तमुत्पादयंति[1] ते सर्वेऽविवर्तिकतायां संत्यनुत्तरायाः सम्यक्संबोधेः ॥२६॥

ये चानंद केचित्सत्त्वास्तं तथागतं पुनः[2] सत्कारमनसिकरिष्यंति बह्वपरिमितं[3] कुशलमूलमवरोपयिष्यंति बोधये चित्तं परिणाम्य तत्र च लोकधातावुपपत्तये प्रणिधास्यंति तेषां सोऽमिताभस्तथागतोऽर्हन्सम्यक्संबुद्धो मरणकालसमये प्रत्युपस्थिते[4]ऽनेकभिक्षुगणपरिवृतः पुरस्कृतः[5] स्थास्यति। ततस्ते तं भगवंतं दृष्ट्वा प्रसन्नचित्ताश्च्युताः संतस्तत्रैव सुखावत्यां लोकधातावुपपत्स्यंते। यश्चानंदाकांक्षेत[6] कुलपुत्रो वा कुलदुहिता वा किमित्यहं दृष्ट एव धर्मे तममिताभं तथागतं[7] पश्येयमिति तेनानुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्याध्याशयातिशयतया संतत्या तस्मिन्बुद्धक्षेत्रे चित्तं संप्रेष्योपपत्तये कुशलमूलानि च[9] परिणामयितव्यानि ॥२७॥

ये पुनस्तं तथागतं न भूयो मनसिकरिष्यंति न च बह्वपरिमितं कुशलमूलमभीक्ष्णमवरोपयिष्यंति[11] तेषां तादृशेनैव[12] सोऽमिताभस्तथागतोऽर्हन्सम्यक्संबुद्धो वर्णसंस्थानारोहपरिणाहेन

[1] From ते to संति left out in C सर्वे ते P [2] P adds पुर before सत्कार. Could it be पुनः पुनः सत्कारं? [3] बह्वपरिमिर्मितं A बह्वपरिनिर्मितं B बह्वपरिमितं C. बह्वपरिमितं P [4] ते B [5] One expects पुरतः, see p 14, l 16; p 48, l 2. [6] क्षेतः P. क्षत A B C [7] तथागत A B C P [8] द्य श्याध्याशयत P द्याध्याशयति। श्याध्याशयतः B [9] वा A B C [10] भिक्षुम A B, भीक्षुम C, P [11] P adds ॥ तत्र च बुद्धक्षेत्रे चित्तं संप्रसयि (i e संप्रेष्य) [12] तादृशेनैव A तादृशेनैव B C P

भिक्षुसंघपरिवारेण च तादृश एव बुद्धिनिर्मितो[1] मरणकालसमये[2] पुरतः स्थास्यति । ते तेनैव तथागतदर्शनप्रसादालंबनेन समाधिनाप्रमुषितया स्मृत्या च्युतास्तत्रैव बुद्धक्षेत्रे प्रत्याजनिष्यंति ॥२८॥

ये पुनरानंद सत्त्वास्तं तथागतं दशचित्तोत्पादात्समनुस्मरिष्यंति स्पृहां च तस्मिंन्बुद्धक्षेत्र[3] उत्पादयिष्यंति गंभीरेषु च धर्मेषु भाष्यमाणेषु तुष्टिं प्रतिलप्स्यंते न विपत्स्यंते न विषादमापत्स्यंते[4] न संसदनमापत्स्यंतेऽतश एकचित्तोत्पादेनापि तं तथागतं मनसिकरिष्यंति स्पृहां चोत्पादयिष्यंति तस्मिन्बुद्धक्षेत्रे तेऽपि स्वप्नांतरगता अमिताभं तथागतं द्रक्ष्यंति सुखावत्यां लोकधातावुपपत्स्यंतेऽवैवर्तिकाश्च भविष्यंत्यनुत्तरायाः सम्यक्संबोधेः ॥२९॥

इमं खल्वानंदार्थवशं संपश्य[5] तथागता दशसु दिक्ष्वप्रमेयासंख्येयासु लोकधातुषु तस्यामिताभस्य तथागतस्य नामधेयं परिकीर्तयंतो वर्णं घोषयंतः संप्रशंसामभ्युदीरयंति । तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे दशभ्यो दिग्भ्य एकैकस्यां दिशि गंगानदीवालुकासमा बोधिसत्त्वास्तममिताभं तथागतमुपसंक्रमंति दर्शनाय वंदनाय पर्युपासनाय परिप्रश्नीकरणाय तं च बोधिसत्त्वगणं तांश्च बुद्धक्षेत्रगुणालंकारव्यूहसंपद्विशेषान्द्रष्टुं[6] ॥३०॥

[1] बुर्द्धि A. बुद्धि B. C. बुद्धा P. The Chinese translation suggests निर्मितबुद्ध°, i.e. Buddha's nirmitakâya. [2] मरणकाले A. C. मरणकालसमये B. मरनकाले P. [3] नुस्मरंति स्पृह चित्तस्मिं A. C. °चित्तस्मिं B. नुस्मरिष्यंति स्पृहां च तस्मिं P. [4] न विपत्स्यंते A. C. न विषादमापत्स्यते left out in P. [5] पश्यं A. B. C. P. [6] संपद्वि° A. B. C. P.

अथ खलु भगवांस्तस्यां वेलायामिममेवार्थं[1] भूयस्या मात्रया परिदीपयन्निमा गाथा अभाषत।

यथैव [2]गंगानदीवालिकासमा[3]।
बुद्धान क्षेत्रा अमितायुनायकं ॥१॥[4]
बहुपुष्पपूटी गृहीत्व।
ते नानावर्णे[5] सुरभी[6] मनोरमां[7]।
ओकिरंति नरनायकोत्तमं।
अमितायु[8] नरदेवपूजितं ॥२॥[10]
तथ दक्षिणा[11] पश्चिमोत्तरासु।
बुद्धान[12] क्षेत्रा दशतासु यांतकाः।
यतो यतो आगमि बुद्ध वंदितुं।
[13]संबोधिसत्त्वा अमितायुनायकं ॥३॥

[1] येलायामिमा A वेलायामिमां B C वेलायामिमा P [2] गगा A [3] कुमा B, deest in A C P [4] This is all that remains of what seems to have been the first verse, consisting of four lines : As the Chinese versions agree in mentioning the Eastern quarter in the first verse, we may conjecture something like

यथैव गंगानदिवालिकासमा।
बुद्धान क्षेत्रा पुरिमा दिशाय।
यतो यतो आगमि बुद्ध वंदितुं।
सबोधिसत्त्वा अमितायुनायक ॥१॥

The general outline of the metre is + – ⏑ | – – | ⏑ ⏑ – | ⏑ – ⏑ (–) [5] र्णे B P [6] भि B P. [7] मामु P [8] उक्ति°, but see verse 4 [9] अमित आयु A B अमितमितायु C [10] Here the metre seems very imperfect, and cannot be restored by a comparison of verse 4 : Possibly a shorter metre than that of verse 1 may have been intended [11] णा A B C न P [12] धा A B P. [13] संबो A, B P

बहुगंधपूटी[1] गृहीत्वा।
नानावर्णे[3] सुरभी[4] मनोरमां।
ओकिरंति नरनायकोत्तमं।
अमितायु नरदेवपूजितं ॥४॥
पूजित्व[6] वा ते बहुबोधिसत्त्वा।
वंदित्व पादाममितप्रभस्य।
प्रदक्षिणीकृत्य वदंति चैवं।
अहोऽद्भुतं शोभति बुद्धक्षेत्रं ॥५॥
ते पुष्पपूटीहि पुनोकिरंति।
उदग्रचित्ता अतुलाय प्रीतिये।
कामं प्रभाषंति पुरस्तनायके[7]।
अस्मापि क्षेत्रं[8] सिय एवरूपं[9] ॥६॥
ये पुष्पपूटा इति क्षिप्त तत्र।
छत्रं[10]तया संस्थिहि योजनाशतं।
स्वलंकृतं शोभति चित्रदंतो[11]।
छादेति बुद्धस्य समंतकायं ॥७॥
ते बोधिसत्त्वा तथ सत्करित्वा।
कथं करोंती इति तुष्ट तत्र।

1 टी P  2 हि P  3 नायर्ठ A  4 भि A B P  5 द्रो P
6 त्वा A B C P  7 From यके to स्तल left out in P  8 त्र A, B C P
9 मियेवरूप A, deest in P  मि एवरूप B  सिय एवरूपं C  10 त्र A B C P
11 ति चित्रसतो A  ति चितमतो B  ति चिचित्रसतो P  टि चित्रसतो C  The letters are not quite clear, we expect चित्र येत्र, or शोभति चित्रकेतो

सुलब्ध लाभाः खलु तेहि सत्त्वैः।
येही श्रुतं नाम नरोत्तमस्य ॥८॥
अस्मेहि[1] पी[2] लाभ सुलब्धपूर्वा।
यदा गतास्य[3] इम बुद्धक्षेत्रं।
पश्याथ स्वप्नोपम मैव कीदृशं।
यत्कल्पितं कल्पसहस्रशास्तुः[5] ॥९॥
पश्याथ बुद्धा वर[6] पुण्यराशिः।
परिवृतो[7] शोभति बोधिसत्त्वैः।
अमिताभस्य आभा[8] अमिता च तेजा।
अमितं च आयूरमितश्च संघः ॥१०॥
स्मितं[10] करोती अमितायुनाथः।
षट्त्रिंश[11]कोटीनयुतान अर्चिषां[12]।
ये निश्चरित्वा मुखमंडलातः।
स्फुरंति क्षेत्राणि सहस्रकोटीः[13] ॥११॥
ताः सर्वसूरीः[14] पुनरेत्य तत्र।
मूर्धे[15] च अस्तं गमि नायकस्य।

[1] ही B [2] पि P [3] गता स्या? [4] य क A C ये क B [5] शास्तु A शास्तुना C, P [6] चल A B [7] परिवृता P, scan परीवृतो. [8] Scan ◡◡–◡ | – –. [9] स्रायूर. Long and short u are difficult to distinguish; the metre requires long u [10] स्वस्मितं A B स्वस्मितं C. स्वस्मित P [11] शत B [12] षां A B C षा P [13] टीः P त्यः B टी C, deest in A [14] सुरीः A C, P. सुराः B. [15] मूर्धे A B र्धे C द्ध P.



658

देवा मनुष्या जनयंति प्रीतिं।
अर्चिं[1]स्तदा अर्स्य[2]मिदां[3] विदित्वा ॥१२॥
उत्तिष्ठते बुद्धसुतो महायशा।
- नाथ सो हि अवलोकितेश्वरः।
को हेतुरच भगवं कः प्रत्ययो।
येन स्मितं कुर्वसि लोकनाथ ॥१३॥
तं व्याकरोही यच सोऽर्थकोविदो।
हितानुकंपी बहुसत्त्वमोचकः।
श्रुत्वेति[4] वाचं परमां मनोरमां।
उदग्रचित्ता भविष्यंति सत्त्वाः ॥१४॥
ये बोधिसत्त्वा बहुलोकधातुतः[5]।
सुखावतीं प्रस्थित बुद्धपश्यतां।
ते श्रुत्वा प्रीतिं विपुलां जनेत्वा।
क्षिप्रमिमं क्षेत्र विलोकयेयुः ॥१५॥
आगत्य च[6] क्षेत्रमिदं उदारं।
ऋद्धीबलं प्रापुणि[7] क्षिप्रमेव।
दिव्यं च चक्षुस्तथ श्रोत्र दिव्यं।
जातिस्मराः पारमिकोविदाश्च[8] ॥१६॥

[1] अर्चिसत A. B. C. अर्सत P. [2] स्त P. [3] ध P. [4] श्रुत्वाति A. P. श्रुत्वेति B. श्रुत्वा C. [5] धातुकः A. B. C. धातवः P. [6] Both च before क्षे and दं must be scanned long. [7] पनि P. [8] परमिमिविदाश्च A. परमात्मविदाश्च B. परमितिमिविदाश्च C. परमतकोविदाश्च P.

अमितायु बुद्धस्तद् व्याकरोति।
मम ह्ययं प्रणिधि बभूव[1] पूर्वे।
कथं पि सत्त्वा श्रुणियानि नाम।
व्रजेयु क्षेत्रं मम नित्यमेव ॥१७॥
स मे अयं प्रणिधि [2]प्रपूर्ण शोभना।
सत्त्वाश्च एभि बहुलोकधातुतः।
आगत्य क्षिप्रं मम अंतिकस्मिं।
अवैवर्तिका[3] भोंतिह एकजातिया ॥१८॥
तस्माद्य इच्छतिह बोधिसत्त्वः।
ममापि क्षेत्रं सिय एवरूपं।
अहं पि सत्त्वान्बहु मोचयेयं।
नामेन[4] घोषेण च[5] दर्शनेन ॥१९॥
स[6] शीघ्रशीघ्रं[7] त्वरमाणरूपः।
सुखावतीं गच्छतु लोकधातु।
गत्वा च पूर्वममितप्रभस्य।
पूजेतु बुद्धान सहस्रकोटीः ॥२०॥
बुद्धान कोटी बहु पूजयित्वा।
ऋद्धीबलेन बहु क्षेत्र गत्वा।

[1] च भूपि A. C. P. चभूप B. [2] चरि A. B. C. [3] सवैवर्तिका A. B. C. P., scanned as ⏑ ⏑ – ⏑ –. [4] नामे B [5] मप A. B. C. [6] स deest in B. [7] शीघ्रं च A. B.

कृत्वान पूजां सुगतान[1] संतिके।
भक्त्या गमिष्यंति सुखावती त इति ॥२१॥३१॥

तस्य खलु पुनरानंदामितायुषस्तथागतस्यार्हतः सम्यक्संबुद्धस्य बोधिवृक्षः। स दश योजनशतान्युच्चैस्त्वेनाष्टौ योजनशतान्यभिप्रलंबितशाखापत्त्रपलाशः पंचयोजनशतमूलारोहपरिणाहः सदापत्त्रः सदापुष्पः सदाफलो नानावर्णोऽनेकशतसहस्रवर्णो नानापत्त्रो[3] नानापुष्पो नानाफलो नानाविचित्रभूषणसमलंकृतश्चंद्रभासमणिरत्नपरिस्फुटः शक्राभिलग्नमणिरत्नविचित्रितश्चिंतामणिरत्नाकीर्णः सागरवरमणिरत्नसुविचित्रितो दिव्यसमतिक्रांतः स्वर्णसूत्राभिप्रलंबितो रुचकहाररत्नहारवत्सहारकटकहारलोहितमुक्ताहारनीलमुक्ताहारसिंहलतामेखलाकलापरत्नसूत्रसर्वरत्नवस्तुशताभिविचित्रितः स्वर्णजालमुक्ताजालसर्वरत्नजालकिंकिणीजालततो[7] मकरस्वस्तिकनंद्यावर्तचंद्रसमलंकृतः किंकिणीमणिजालसौवर्णसर्वरत्नालंकारविभूषितो यथाशयसत्त्वविज्ञप्तिसमलंकृतश्च ॥ तस्य खलु पुनरानंद बोधिवृक्षस्य वातसमीरितस्य यः शब्दो घोषो निश्चरति सोऽपरिमाणाँल्लोकधातून्विज्ञापयति। तत्रानंद येषां सत्त्वानां स बोधिवृक्षः श्रोत्रावभासमागच्छति तेषां श्रोत्ररोगो न प्रतिकांक्षितव्यो

[1] गार A B P [2] शम A B शमे C समे P [3] नानापत्रो deest in C
[4] रुचनसहार C वत्सहारपत्तहार deest in P [5] नीलमुक्ताहार P [6] सर्वरत्न deest in B [7] जाल ततः । A C जाल ॥ ततः B जाल च ततः P [8] नंद्यावद्रचंद्र P
[9] रत्ना deest in C

यावद्बोधिपर्यंतं । येषाममप्रमेयासंख्येयाचिंत्यातुल्यामाप्यापरिमाणानभिलाप्यानां सत्त्वानां स बोधिवृक्षश्चक्षुष आभासमागच्छति तेषां चक्षूरोगो न प्रतिकांक्षितव्यो यावद्बोधिपर्यंतं । ये खलु पुनरानंद सत्त्वास्ततो बोधिवृक्षाद्गंधं जिघ्रंति तेषां यावद्बोधिपर्यंतं न जातु घ्राणरोगः प्रतिकांक्षितव्यः। ये सत्त्वास्ततो बोधिवृक्षात्फलान्यास्वादयंति[1] तेषां यावद्बोधिपर्यंतं न जातु जिह्वारोगः प्रतिकांक्षितव्यः। ये सत्त्वास्तस्य बोधिवृक्षस्याभया स्फुटा भवंति तेषां यावद्बोधिपर्यंतं न जातु कायरोगः प्रतिकांक्षितव्यः। ये च[2] खलु पुनरानंद सत्त्वास्तं बोधिवृक्षं धर्मतो निध्यायंति तेषां तत उपादाय यावद्बोधिपर्यंतं न जातु चित्तविक्षेपः प्रतिकांक्षितव्यः। सर्वे च ते सत्त्वाः सहदर्शनात्तस्य बोधिवृक्षस्याविवर्तिकाः संतिष्ठंते यदुतानुत्तरायाः सम्यक्संबोधेः। तिस्रश्च क्षांतीः प्रतिलभंते यदिदं घोषानुगामनुलोमिकीमनुत्पत्तिकधर्मक्षांतिं[3] च तस्यैवामितायुषस्तथागतस्य पूर्वप्रणिधानाधिष्ठानेन पूर्वजिनकृताधिकारतया पूर्वप्रणिधानपरिचर्यया च सुसमाप्तया सुभावितयानूनाविकलतया ॥३२॥

तत्रैव खलु पुनरानंद ये बोधिसत्त्वाः प्रत्याजाताः प्रत्याजायंते प्रत्याजनिष्यंते वा सर्वे त एकजातिप्रतिबद्धास्तत एवानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यंते स्थापयित्वा प्रणिधानवशं[4] ये ते

[1] बोधिवृक्षफलान्या P. [2] च B. [3] घोषानुशामनुलो A. B C घोषानुमा चनुसो P.
[4] वशं A B C वसेन P विशेषात्? see p 15, l 9.

बोधिसत्त्वा महासिंहनादंनादिन उदारसंनाहसंनद्धाः सर्वसत्त्वपरिनिर्वाणाभियुक्ताश्च ॥३३॥

तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे ये श्रावकास्ते व्यामप्रभा ये बोधिसत्त्वास्ते योजनकोटीशतसहस्रप्रभाः स्थापयित्वा द्वौ बोधिसत्त्वौ ययोः[3] प्रभया सा लोकधातुः सततसमितं नित्यावभासस्फुटा॥ अथ खल्वायुष्मानानंदो भगवंतमेतदवोचत्। किंनामधेयौ भगवंस्तौ बोधिसत्त्वौ महासत्त्वौ। भगवानाह। एकस्तयोरानंदावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो द्वितीयो महास्थामप्राप्तो नाम। इत एव चानंद बुद्धक्षेत्राच्च्युत्वा तौ तत्रोपपन्नौ ॥३४॥

तत्र चानंद बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाताः सर्वे ते द्वात्रिंशन्महापुरुषलक्षणसमन्वागताः परिपूर्णगात्रा ध्यानाभिज्ञाकोविदाः प्रज्ञाप्रभेदकुशलास्तीक्ष्णेंद्रियाः सुसंवृतेंद्रिया आज्ञातावींद्रिया[4] अदीना[5] बलेंद्रियाः प्रतिलंभक्षांतिका अनंतापर्यंतगुणाः ॥३५॥

तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे ये बोधिसत्त्वाः प्रत्याजाताः सर्वे तेऽविरहिता[6] बुद्धदर्शनेनाविनिपातधर्माणो यावद्बोधिपर्यंतं सर्वे ते तत[7] उपादाय न[8] जातु जातिस्मरा भविष्यंति स्थापयित्वा तथारूपेषु कल्पसंक्षोभेषु ये पूर्वस्थानप्रणिहिताः पंचसु कषायेषु[9]

[1] नादं C. [2] संनाह P संहार A. B. C. [3] यया: A. C. यया B. P.
[4] आज्ञातावीन्द्रिया A. C. आज्ञातवीन्द्रिया B. आज्ञाताविन्द्रिया P. See Childers, s. v. indriyam. [5] यादीना A. C. यदिना B. सादिना P. [6] ऽविनिवर्तनीय वि A. B. C. चपियर्तनीयं वि P.; deest in p. [7] तत्र A. B. त C. तत्र P. [8] न A. B. C. P.
[9] For the pañkakashâya, see the small Sukhâvatîvyûha, § 19.

वर्तमानेषु यदा बुद्धानां भगवतां लोके प्रादुर्भावो भवति। तद्यथापि नाम ममैतर्हि ॥३६॥

तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे ये बोधिसत्त्वाः[1] प्रत्याजाताः सर्वे त एकपुरोभक्तेनान्याँल्लोकधातून्गत्वानेकानि बुद्धकोटीनियुतशतसहस्राण्युपतिष्ठंति यावदाकांक्षंति बुद्धानुभावेन। ते यथायथा चित्तमुत्पादयंति एवमेवंरूपैः[2] पुष्पधूपदीपगंधमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयंतीतूर्यसंगीतिवाद्यैः पूजां कुर्याम इति तेषां सहचित्तोत्पादात्तथारूपाणि च सर्वपूजाविधानानि पाणौ प्रादुर्भवंति। ते तैः पुष्पैर्यावद्वाद्यैस्तेषु बुद्धेषु भगवत्सु पूजां कुर्वंतो बहूपरिमाणासंख्येयं[3] कुशलमुपचिन्वंति। [4]सचेत्पुनराकांक्षंत्येवंरूपाः पुष्पपूटाः पाणौ प्रादुर्भवंत्विति[5] तेषां सहचित्तोत्पादान्नानावर्णा अनेकवर्णा नानागंधा दिव्याः पुष्पपूटाः पाणौ प्रादुर्भवंति। ते तैस्तथारूपैः पुष्पपूटैस्तान्बुद्धान्भगवतोऽवकिरंत्यभ्यवकिरंत्यभिप्रकिरंति। तेषां च यः सर्वपरीतः पुष्पपूट उत्सृष्टः स दशयोजनविस्तरं पुष्पच्छत्रं प्रादुर्भवत्युपर्यंतरीक्षे द्वितीये चानूत्सृष्टे न प्रथमो धरण्यां प्रपतति। संति तत्र पुष्पपूटा य उत्सृष्टाः संतो विंशतियोजनविस्ताराणि पुष्पच्छत्राण्युपर्यंतरीक्षे प्रादुर्भवंति। संति त्रिंशच्चत्वारिंशत्पंचाशद्योजनविस्ताराणि

[1] सत्त्वाः A B C बोधिसत्त्वाः P [2] एवंमेवंरूपैः A एवमेव रूपैः B C P
[3] या A C P, deest in B [4] From सचेत् to प्रादुर्भवंति। left out in B [5] भवन्ति A भवन्तिति C भवन्त्विति P [6] ऽभ्यवकिरंति C [7] सहस्रयोजन A C शतयोजन B दशयोजन P

संति यावद्योजनशतसहस्रविस्ताराणि पुष्पच्छत्राण्युपर्यंतरीक्षे प्रादुर्भवंति । तत्र च उदारं प्रीतिप्रामोद्यं संजनयंति उदारं च चित्तौद्बिल्यं प्रतिलभंते ते बह्वपरिमितमसंख्येयं कुशलमूलमवरोप्य बहूनि च बुद्धकोटीनियुतशतसहस्राण्युपस्थायैकपूर्वाह्णेन पुनरपि सुखावत्यां लोकधातौ प्रतिष्ठंते तस्यैवामितायुषस्तथागतस्य पूर्वप्रणिधानाधिष्ठानपरिग्रहेण पूर्वदत्तधर्मश्रवणेन पूर्वजिनावरोपितकुशलमूलतया पूर्वप्रणिधानसमृद्धिपरिपूर्यात्मभूतया सुविभक्तभाविततया[3] ॥३७॥

तस्मिन्खलु पुनरानंद बुद्धक्षेत्रे ये सत्त्वाः प्रत्याजाताः सर्वे ते सर्वज्ञतासहगतामेव धर्मकथां कथयंति । न च तत्र बुद्धक्षेत्रे सत्त्वानां काचित्परिग्रहसंज्ञास्ति ते सर्वे च तद्बुद्धक्षेत्रमनुचंक्रमाणा अनुविचरंतो न रतिं नारतिमुत्पादयंति प्रक्रामंतश्चानपेक्षा न च प्रक्रामंति सापेक्षाः[7] । सर्वसत्त्वेषामेव चित्तं नास्ति ॥ तत्र खलु पुनरानंद सुखावत्यां लोकधातौ ये सत्त्वाः प्रत्याजाता नास्ति तेषामन्यतमकसंज्ञा नास्ति स्वकसंज्ञा नास्त्यसमसंज्ञा नास्ति विग्रहो नास्ति विवादो नास्ति विरोधः । समचित्ता[9] मैत्रचित्ता मृदुचित्ताः स्निग्धचित्ताः कर्मण्यचित्ताः प्रसन्नचित्ताः[10] स्थिरचित्ता विनीव-

[1] From धिष्ठान to धान left out in B [2] धिष्ठपरि A धिष्ठानाधिष्ठपरि C. धिष्ठानं धिष्ठतपरि P [3] सुविभक्तया भवितया A सुविभक्तया भावितया B C. सुविभक्तभावितया P. [4] मे सर्वं च तथाबुद्ध A. मे सर्वे च ते यावत् बुद्ध B मे सर्वे च तद्बुद्ध C सर्वेच तद्बुद्ध P [5] प्रक्रा° A B C. P [6] तो B. [7] न च प्रकामति न सापेक्षाः A B मंति C.; deest in P. [8] नास्ति नास्ति A नास्ति B P नास्ति स्ति C [9] In Chinese, 'possessed of the thought of equalness' [10] प्रसन्नचित्ताः deest in A B

रणचित्ता अक्षुभितचित्ता अलुडितचित्ताः प्रज्ञापारमिताचर्याचरणचित्तास्थित्ताधारबुद्धिप्रविष्टाः सागरसमाः प्रज्ञया[1] मेरुसमा बुद्ध्यानेकगुणसंनिचया बोध्यंगसंगीत्या विक्रीडिता बुद्धसंगीत्यभियुक्ता मांसचक्षुः प्रविचिन्वंति दिव्यं चक्षुरभिनिर्हरंति प्रज्ञाचक्षुर्गतिंगता धर्मचक्षुःपारगता[2] बुद्धचक्षुर्निष्पादयंतो दर्शयंतो द्योतयंतो विस्तरेण प्रकाशयंतोऽसंगज्ञानमभिनिर्हरंति। त्रैधातुकसमतायामभियुक्ता दांतचित्ताः शांतचित्ताः सर्वधर्मधातूपलब्धिसमन्वागताः समुदयनिरुक्तिकुशला धर्मनिरुक्तिसमन्वागता हाराहारकुशला नयानयकुशलाः स्थानकुशला लौकिकीषु कथास्वनपेक्षा विहरंति लोकोत्तराभिः कथाभिः सारं प्रत्ययंति। सर्वधर्मपर्ये[3]ष्टिकुशलाः सर्वधर्मप्रकृतिव्युपशमज्ञानविहारिणोऽनुपलंभगोचरा निष्किंचना निरुपादाना निश्चिंता निरुपधयोऽनुं[4]पादाय सुविमुक्ता अनंगणा[5] अपर्यस्थायिनोऽभिज्ञास्वमूलस्थायिनोऽसंगाचारिका अनवलीना गंभीरेषु धर्मेष्वभियुक्ता न संसीदंति दुरनुबोधबुद्धज्ञानप्रवेशोद्गता[6] एकायनमार्गानुप्राप्ता निर्विचिकित्सास्तीर्णकथंकथा अपरप्रत्ययज्ञाना अनधिमानिनः। सुमेरुसमा[7] ज्ञानाभ्युद्गताः। सागरसमा बुद्ध्यक्षोभ्याः[8]। चंद्रसूर्यप्रभातिक्रांताः प्रज्ञाभया पांडरसुशुक्लशुद्धशुभचित्ततया च। उत्तम-

[1] प्रज्ञेया B  [2] परांगता A B C परागताः P.  [3] र्यं A B C. P.  [4] नु deest in A. B.  [5] असंगना P  [6] द्गो A. B C द्ग P.  [7] For comparisons of the same kind, see Lal. Vist p. 550.  [8] बुद्धाक्षोभ्याः A बुद्धाऽक्षोभ्याः B. बुद्ध्याक्षोभ्यः C बुध्याक्षोभ्याः P

हेमवर्णसदृशा अवभासनिर्भासतया[2] च। वसुंधरासदृशाः सर्वसत्त्वशुभाशुभक्षमणतया। अप्सदृशाः[3] सर्वक्लेशमूलनिधावनप्रवाहणतया च। अग्निराजसदृशाः सर्वधर्ममन्यनाक्लेशनिर्दहनतया। वायुसदृशाः सर्वलोकासंजनतया[5]। आकाशसदृशाः सर्वधर्मनैर्वे[6]धिकतया सर्वशो निष्किंचनतया च। पद्मसदृशाः सर्वलोकानुपलिप्ततया। कालानुसारिमहामेघसदृशा धर्माभिगर्जनतया। महावृष्टिसदृशा धर्मसलिलाभिप्रवर्षणतया। ऋषभसदृशा महागणाभिभवनतया। महानागसदृशाः परमसुदांतचित्ततया। भद्राश्वाजानेयसदृशाः सुविनीततया। सिंहमृगराजसदृशा विक्रमवैशारद्यासंत्रस्ततया। न्यग्रोधद्रुमराजसदृशाः सर्वसत्त्वपरित्राणतया। पर्वतराजसदृशाः सर्वपरप्रवाद्यकंपनतया। गगणसदृशा अपरिमाणमैत्रीप्रभावनतया। महाब्रह्मसमाः सर्वकुशलमूलधर्माधिपत्यपूर्वंगमतया। पक्षिसदृशा असंनिचयस्थानतया। गरुडद्विजराजसदृशाः सर्वपरप्रवादिविध्वंसनतया। उदुंबरपुष्पसदृशा दुर्लभाप्रत्यर्थितया नागवत्सुसमाहिता अविक्षिप्तांजिह्मेंद्रियतया। विनिश्चयकुशलाः क्षांतिसौरभ्यबहुला अनीर्षुकाः परसंपत्त्यप्रार्थनतया विशारदा धर्मकथास्वतृप्ता धर्मपर्येष्ट्या[10] वैडूर्यसदृशा

[1] च deest in all MSS  [2] निर्भास deest in I  [3] तथा सुमदृशा A B C P Saṅghavarman's Chinese translation shows that he must have read अप्सदृशा  [4] मन्यना A B I  मन्न C  [5] कासज्ञ A B C  कासक्त I  [6] नैर्वे A B C  भेद P  [7] थो P  Should it be दुर्लभतया । प्रत्यर्थित?  [8] या deest in all MSS  [9] अविक्षिप्ता च A B C  सुविक्षिप्तो च I  [10] र्येष्या A  र्येश B  पस्या C  र्येस्य P

शीलेन रत्नाकरा:[1] श्रुतेन मंजुस्वरा महाधर्मदुंदुभिनिर्घोषेण महाधर्मभेरीं पराघ्नंतो महाधर्म[2]शंखमापूरयंतो महाधर्मध्वजमुच्छ्रापयंतो धर्मोल्कां प्रज्वालयंतः प्रज्ञाविलोकिनोऽसंमूढा निर्दोषाः शांतखिलाः शुद्धा निरामगंधा अलुब्धाः संविभागरता मुक्तत्यागाः प्रसृतपाणयो दानसंविभागरता धर्मामिषाभ्यां दानेऽमत्सरिणोऽसंसृष्टा उत्त्रस्तमानसा[3] विरक्ता धीरा धौरेया धृतिमंतो ह्रीमंतः सुव्यूढसत्त्वा निर्गाढाः[4] प्राप्ताभिज्ञाः सुरताः सुखसंवासा अर्थंकरा लोकप्रद्योता नापदागंतुं[5] धीरा रागं तमः[6] अनेकस्वच्छाः शो[7]कापगता निर्मला निमेषप्रहीणा विक्रीडिताभिज्ञा हेतुबलिकाः प्रणिधानबलिका अजिह्मा अकुटिला ए[8]ते लक्षकोटीनियुतशतसहस्रावरोपितकुशलमूला उत्पाटितमानशल्या अपगतरागद्वेषमोहाः शुद्धाः शुद्धाधिमुक्ता जिनबलप्रशस्ता लोकपंडिता उत्तप्रज्ञानसमुदागता[9] जिनसुताश्चित्तोद्बिल्यसमन्वागताः शूरा दृढा[10] अममा अखिला अतुला अरजस्काः[11] सहिता उदारा ऋषभा ह्रीमंतो धृतिमंतः स्मृतिमंतो मतिमंतो[12] गतिमंतः प्रज्ञाशस्त्रप्रहरणा पुण्यवंतो द्युतिमंतो व्यपगतखिला मलप्रहीणाः स्मृतियुक्ताः शांतज्ञानालंभाः। ईदृशा आनंद तस्मिन्बुद्ध-

[1] धीकराः added in B after रत्नाकराः. [2] धर्मं P [3] उत्त्रस्तमानसाः P. अनुत्त-स्तमानसाः? [4] निर्गोडा A. निर्वोडा B. नर्गोडाः C. निरगडाः P. [5] गंतुं A. B. गंतु C. P. [6] धीराधागंतमः A B. धीरागंतमः C धीराधागंत P [7] शोको A B C. स्तक P. The whole of this sentence is unintelligible [8] य A. C. P. ए B [9] From जिन to गताः left out in P [10] दृढा deest in P [11] सरजस्काः A. B C. सरज-स्काः P. [12] मतिमंतो deest in C

क्षेत्रे सत्त्वाः संक्षिप्तेन च[1]। विस्तरेण पुनः सचेत्कल्पकोटीनियुतशतसहस्रस्थितिकेनाप्यायुष्प्रमाणेन तथागता निर्दिश्येरन्नैव शक्यं तेषां सत्पुरुषाणां गुणपर्यंतमधिगंतुं । न च तथागतस्य वैशारद्योपच्छेदो भवेत् । तत्कस्य हेतोः । उभयमप्येवानंदाचिंत्यमतुल्यं यदिदं तेषां बोधिसत्त्वानां गुणास्तथागतस्य चानुत्तरं[2] प्रज्ञाप्रतिभानं ॥३८॥[3]

अपि चानंद उत्तिष्ठ पश्चान्मुखीभूत्वा पुष्पावकीर्णांजलीं प्रगृह्य प्रणिपत[4]। एषा[5] सा दिग्यत्र स भगवानमिताभस्तथागतोऽर्हन्सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति धर्मं च देशयति विरजो विशुद्धं यस्य तन्नामधेयमनावरणं दशदिशि लोके विघुष्टमेकैकस्यां दिशि गंगानदीवालुकासमा बुद्धा भगवंतो वर्णयंति स्तुवंति प्रशंसंत्यसकृदसकृदसंगवाचामतिवाक्याः ॥ [7]एवमुक्त आयुष्मानानंदो भगवंतमेतदवोचत् । इच्छाम्यहं भगवंस्तममिताभममितप्रभममितायुषं तथागतमर्हंतं सम्यक्संबुद्धं द्रष्टुं तांश्च बोधिसत्त्वान्महासत्त्वान्बहुबुद्धकोटीनियुतशतसहस्रावरोपितकुशलमूलान् । समनंतरभाषितायुष्मतानंदेनेयं वाक् अथ तावदेव सोऽमिताभस्तथागतोऽर्हन्सम्यक्संबुद्धः स्वपाणितलात्तथारूपं रश्मिं प्रामुंचद्यदिदं कोटीनियुतशतसहस्रतमं बुद्धक्षेत्रं महता-

[1] च B । A C P  [2] ञ्तरा P  [3] Here the three earliest Chinese translations insert ten long sections, while the two later Chinese translations follow the Sanskrit text  [4] पतं A. B C. पत P.  [5] एमा A. B C  [6] असकृदसकृत्संगा वाचोम॑तिवाक्या॰ । A. B. असकृत्संगा॰ C असकृद् संगा वाक्याः । P  [7] एवमुक्ते आयुष्मानानन्दो A B C. एवमुक्ते आयुष्मानानन्दो P  [8] भममितप्रभममिता left out in P.

[1]वभासेन स्फुटमभूत् ॥ तेन खलु पुनः[2] समयेन सर्वत्र कोटीशतसहस्रबुद्धक्षेत्राणां ये केचित्कालपर्वता वा[3] रत्नपर्वता वा मेरुमहामेरुमुचिलिंदमहामुचिलिंदचक्रवाडमहाचक्रवाडा वा[4] चितयो[5] वा स्तंभा वा वृक्षगहनोद्यानविमानानि दिव्यमनुष्यकाणि तानि सर्वाणि तस्य[6] तथागतस्य तया प्रभयाभिनिर्भिन्नान्यभूवन्समभिभूतानि ॥ तद्[7]यथापि नाम पुरुषो व्याममात्रकेऽन्वितो द्वितीयं पुरुषं प्रत्यवेक्षेदादित्येऽभ्युद्गत एवमेवास्मिन्बुद्धक्षेत्रे भिक्षुभिक्षुण्युपासकोपासिकांदेवनागयक्षराक्ष[10]सगंधर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्याश्च तस्यां वेलायामद्राक्षुस्तममिताभं तथागतमर्हंतं सम्यक्संबुद्ध सुमेरुमिव पर्वतराजं सर्वक्षेत्राभ्युद्गतं सर्वा दिशोऽभिभूय भासमानं तपंतं विरोचमानं विभ्राजमानं तं च महांतं बोधिसत्त्वगणं तं च भिक्षुसंघं यदिदं बुद्धानुभावेन तस्याः प्रभायाः परिशुद्धत्वात् ॥ तद्यथेयं महापृथि[11]व्येकोदकजाता भवेत्तत्र न वृक्षा न पर्वता[12] न द्वीपा न तृणगुल्मौ[13]षधिवनस्पतयो न नदीस्व[14]भ्रप्रपाताः प्रज्ञापयेरन् अन्यत्रैकार्ण[15]वीभूता महापृथिव्येका स्यात् एवमेव तस्मिन्बुद्धक्षेत्रे नास्त्यन्यत्किंचिल्लिंगं वा निमित्तं वान्यत्रैव व्यामप्रभाः श्रावकास्ते च योजनकोटी[16]शतसहस्रप्रभा

[1] From वभासेन to रत्नपर्वता and महामेरु left out in P [2] पुन A B अपि C [3] वा deest in C [4] वा deest in P [5] चितयो A C P चित्रयो B [6] तस्य deest in B [7] द्य deest in A B C [8] भिक्षु deest in C [9] सिका P [10] राक्षस deest in C P [11] From वी एकोदक to भूतमहापृथि left out in B [12] ता deest in A B [13] गुल्मो in all MSS [14] स्वभ P स्वत्र A B C स्वभ्र or श्वभ्र? [15] कार्ण deest in P [16] कोटी P

बोधिसत्त्वाः । स च भगवानमिताभस्तथागतोऽर्हन्सम्यक्संबुद्धस्तं च श्रावकगणं तं च[1] बोधिसत्त्वगणमभिभूय सर्वा दिशः प्रभासयन्संदृश्यते । तेन खल्वपि[2] समयेन तस्यां सुखावत्यां लोकधातौ बोधिसत्त्वाः श्रावकदेवमनुष्याश्च सर्वे त इमां सहालोकधातुं शाक्यमुनिं च तथागतमर्हंतं सम्यक्संबुद्धमर्हता भिक्षुसंघेन परिवृतं पश्यंति स्म धर्मं देशयंतं[3] ॥३९॥

तत्र खलु भगवानजितं बोधिसत्त्वं महासत्त्वमामंत्रयते स्म । पश्यसि त्वमजितास्मिन्बुद्धक्षेत्रे गुणालंकारव्यूहसंपदं । उपरिष्टाच्चांतरीक्ष[4] आरामरमणीयान्युद्यानरमणीयानि नदीपुष्करिणीरमणीयानि[5] नानारत्नपद्मोत्पलकुमुदपुंडरीकाकीर्णानि । अधस्ताच्च धरणीतलमुपादाय यावदकनिष्ठभवनाद्गगनतलं[6] पुष्पाभिकीर्णं पुष्पावलिसमुपशोभितं[7] नानारत्नस्तंभपंक्तिपरिस्फुटं तथागताभिनिर्मितनानाद्विजसंघनिषेवितं[8] । अजितो बोधिसत्त्व[9] आह । पश्यामि भगवन् । भगवानाह । पश्यसि पुनस्त्वमजित[10] [11]एतानमरान्द्विजसंघान्सर्वबुद्धक्षेत्रं बुद्धस्वरेणाभिविज्ञापयतं येनैते [12]बोधिसत्त्वा नित्यमविरहिता बुद्धानुस्मृत्या । [13]अजित आह ।

[1] च B. [2] खलु A C खलु च B खल्वपि P. [3] देशयन्तिं P [4] क्षे A. B. C.; deest in P [5] णीरमणीया deest in P [6] तरं A B C [7] पुष्पवतीसमुशोभितं A B C. पुष्पावलिसमुपशोभितं P [8] निहित A B C. निसृतं P [9] अजितो बोधिसत्त्व deest in P [10] पश्यसि पुनस्त्वमजित deest in A B C [11] एतानमरान्द्विजसंघा सर्वबुद्धक्षेत्रा बुद्धस्वराभिविज्ञापयन्तं A एतानमरान्द्विजसंघान् सर्वबुद्धक्षेत्रान् बुद्धस्वरा° B एतानमरानद्विजसंघा सर्वबुद्धक्षेत्रे बुद्धस्वरा° C. एता अजितरमद्विजसंघा सर्वबुद्धक्षेत्र बुद्धस्वरेणाभिज्ञापयन्तं P It should be either संघं or विज्ञापयंतो येनैते. [12] यो deest in A [13] नि महाराज instead of अजित आह P.

पश्यामि भगवन् । भगवानाह । पश्यसि पुनस्त्वमजितात्र बुद्धक्षेत्रेऽमूंस्सत्वान्योजनशतसहस्रिकेषु विमानेष्वभिरूढानंतरीक्षे ससत्कारान्क्रामंतः[1] । अजित आह[2] । पश्यामि भगवन् । भगवानाह । तत्किं मन्यसेऽजित[3] अस्ति किंचिन्नानात्वं देवानां परनिर्मितवशवर्तिनां सुखावत्यां लोकधातौ मनुष्याणां वा । अजित[4] आह । एकमप्यहं भगवन्नानात्वं न समनुपश्यामि यावन्महर्द्धिका अत्र सुखावत्यां लोकधातौ मनुष्याः । भगवानाह । पश्यसि पुनस्त्वमजित तत्र सुखावत्यां लोकधातावेतेषां मनुष्याणामुदारेषु पद्मेषु[5] गर्भावासं[6] । आह । तद्यथापि नाम देवास्त्रायस्त्रिंशा देवा यामा वा[7] पंचाशद्योजनिकेषु वा योजनशतिकेषु वा पंचयोजनशतिकेषु वा विमानेषु प्रविष्टाः[8] क्रीडंति रमंति[9] परिचारयंति एवमेवाहं भगवन्नत्र[10] सुखावत्यां लोकधातावेतेषां मनुष्याणामुदारेषु पद्मेषु गर्भावासं[11] पश्यामि ॥४०॥

संति खलु पुनरत्र भगवन्सत्वा य औपपादुकाः पद्मेषु पर्यंकैः प्रादुर्भवंति । तत्कोऽत्र भगवन्हेतुः कः प्रत्ययो[12] यदन्ये गर्भावासं प्रतिवसंति अन्ये पुनरौपपादुकाः पद्मेषु पर्यंकैः[13] प्रादुर्भवंति ।

[1] ससत्कारान्क्रामतः A  ससत्कारान्क्रामंत B  ससत्का क्रामतः C  ससत्कारं क्रमतः P  [2] अजितो बोधिसत्त्वा आह P.  [3] Deest in P  [4] अजित deest in P.  [5] पु पपद्मेषु A. पूपपद्मेषु B C. P.  [6] गर्भेवासं A. B  गर्भावासं C P.  [7] देवा B  [8] प्रविष्टाः A. B. C.  प्रतिष्टा P.  [9] रमंते P  [10] त्र deest in B  [11] गर्भावासं A P.  गर्भेवासं B  From गर्भावासं to पद्मेषु left out in C  [12] प्रत्यायोगः A. B.  प्रत्ययोगः C.  प्रयोग P.  [13] अन्य पुनरौपपादुकाः पर्यंको पर्य्यंकेषु A.  अन्यत्पुनरौपपादुकाः पर्यंको पर्य्यंकेषु B.  अन्ये पुनरौपपादुकाः पर्य्यंको पर्य्यंकेषु C  अन्येषु न औपपादुका पर्यंको पर्यंकेषु P.

भगवानाह । ये तेऽजित बोधिसत्त्वा अन्येषु बुद्धक्षेत्रेषु स्थिताः[1] सुखावत्यां लोकधातावुपपत्तये [2]विचिकित्सामुत्पादयंति तेन चित्तेन कुशलमूलान्यवरोपयंति [3]तेषामत्र गर्भावासो भवति । ये पुनर्निर्विचिकित्सामुत्पाद्य छिन्नकांक्षाः सुखावत्यां लोकधातावुपपत्तये कुशलमूलान्यवरोपयंति बुद्धानां भगवतामसंगज्ञानमेवाकल्पयंत्यभिश्रद्दधत्यधिमुच्यंते त औपपादुकाः पद्मेषु पर्यंकैः प्रादुर्भवंति । ये तेऽजित बोधिसत्त्वा महासत्त्वा अन्यत्र बुद्धक्षेत्रेषु स्थिताश्चित्तमुत्पादयंत्यमिताभस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य दर्शनाय न विचिकित्सामुत्पादयंति न कांक्षंत्यसंगं बुद्धज्ञानं स्वंकुशलमूलं चाभिश्रद्दधति तेषामौपपादुकानां पर्यंकैः [6]प्रादुर्भूतानां मुहूर्तमात्रेणैवंरूपः कायो भवति तद्यथान्येषां चिरोपपन्नानां सत्त्वानां ॥ पश्याजित प्रज्ञाविशेषं[7] प्रज्ञावैमात्र्यं प्रज्ञापरिहाणिं प्रज्ञापरीत्ततां यत्तु हिताय पंच वर्षशतानि[8] परिहीणा भवंति बुद्धदर्शनाद्बोधिसत्त्वदर्शनाद्धर्मश्रवणाद्धर्मसंकथनात्कुशलमूलचर्यायाः परिहीणा भवंति सर्वकुशलमूलसंपत्तिभिः[9]। यदिदं विचिकित्सापतितैः संज्ञामनसिकारैः। तद्यथापि नामाजित राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य बंधनागारं भवेत्सर्वसौवर्णवैडूर्य-

[1] प्रस्थिताः P. [2] From विचिकित्सा to चित्तेन left out in C. [3] From तेषां to कुशलमूलान्यवरोपयंति left out in C P [4] From यरोपयंति to महासत्त्वा च left out in A. B. यरोपयंति in P. only [5] सूत्रस्य A. सूत्रं स्त B. C. P. [6] प्रादुर्भूतानां मुहूर्तमात्रेणैवरूपाः A. प्रादुर्भूतानामुहूत्तमात्रेणैवरूपाः B. प्रादुर्भूतानामुहूत्तमात्रेणैवरूपाः C प्रादुर्भूतानां मुहूर्तमात्रेनैवरूपाः P. [7] प्रज्ञाशेषां A. B. प्रज्ञाशेषं C. प्रज्ञाविशेषं P. [8] From नि परिहीणा to पिता left out in P [9] संपत्तिभि A. संपत्तिभिः ॥ B. संपत्तिभि C.

प्रत्युप्तमवसक्तपट्टमाल्यदामकलापं नानारंगविभववितानं दूष्यपट्टसंछन्नं[2] नानापुष्पकुसुमाभिकीर्णमुदारधूपनिर्धूपितं प्रासादहर्म्यनिर्यूहंगवाक्षवेदिकातोरणविचित्रं सप्तरत्नकिंकिणीजालसंछन्नं चतुरस्रं चतुःस्थूणं[5] चतुर्द्वारं चतुःसोपानं। तत्र तस्य स राज्ञः पुत्रः केनचिदेव कृत्येन प्रक्षिप्य जांबूनदसुवर्णमयैर्निगडैर्बद्धो भवति। तस्य च तत्र [6]पर्यंकः प्रज्ञप्तः स्यादनेकगोनिकास्तीर्णतूलिकापर्णकास्तीर्णः कालिंगप्रावरणप्रत्यास्तरणसोत्तरपदच्छद उभयांतलोहितोपधानश्चित्रो दर्शनीयः। स तत्र तदाभिषण्णो वाभिसंपन्नो वा भवेत्। बहु चास्यानेकविधं शुचि विनीतं पानभोजनं तत्रोपनाम्येत। तत्किं मन्यसेऽजितोदारस्तस्य राजपुत्रस्य स परिभोगो भवेत्। अजित[8] आह। उदारो भगवन्। भगवानाह। तत्किं मन्यसेऽजितापि त्वास्वादयेत्तत्र निशामयेद्व[9] तेन वा तुष्टिं विद्यात्। आह। नो हीदं भगवन् अपि तु[10] खलु पुनर्यद्यपनीय[11] राज्ञा तत्र बंधनागारे प्रक्षिप्तो भवेत्स ततो मोक्षमेवाकांक्षेत्। अभिजाताकुमारानमात्यान्स्त्र्यागारांश्[12]छ्रेष्ठिनो

[1] अवसक्तपत A B अवसक्तपट्ट C Cf Lal Vist p 186, l 10, अवशक्तपट्टमाल्यदामकलापे; also Burnouf, Lotus, p 369 [2] दुष्यपट्टसंछन्नं A C दुष्यप्रट्टशाब्दसं B ष्यपत्तसंच्छन्न P [3] निर्यूह P [4] After सप्तरत्न, P adds प्रतिमण्डितं ॥ हेमरत्न [5] चतुस्थण A चतुशास B चतुस्थुणं C चतुस्थुन P [6] From पर्यंक to स तत्र left out in B [7] रेन P [8] अजित deest in P [9] निगमयेद्व A C P. निगमेयच्च B [10] तु deest in C P [11] पनर्यत्यपनीय A पुनर्यद्यपनीय B पनर्यंत्यपनीते C पुनर्यंत्यापदिते P [12] रोनमात्यास्त्यंगा A रोनामात्यान्या B रोस्मात्यास्त्यंगा C. रोनयात्यास्त्र्यागारं P

गृहपतीन्कोट्टराजांश्च पर्येषयेद्य एनं ततो बंधनागारात्परिमोचयेयुः। किंचापि भगवंस्तस्य राजकुमारस्य तत्र बंधनागारे नाभिरतिर्नैव परिमुच्यते यावन्न राजा प्रसादमुपदर्शयति। भगवानाह। एवमेवाजित ये ते बोधिसत्त्वा विचिकित्सापतिताः कुशलमूलान्यवरोपयंति कांक्षंति बुद्धज्ञानं[1] किंचापि तेन बुद्धनामश्रवणेन [2]तेन च चित्तप्रसादमात्रेणात्र सुखावत्यां लोकधातावुपपद्यंते न तु खल्वौपपादुकाः पद्मेषु पर्यंकैः प्रादुर्भवंति अपि तु पद्मेषु गर्भावासं प्रतिवसंति। किंचापि तेषां तत्रोद्यानविमानसंज्ञाः संतिष्ठंते। नास्त्युच्चारप्रस्रावं नास्ति खेटसिंहाणकं न प्रतिकूलं मनसः प्रवर्तते। अपि तु खलु पुनः पंच वर्षशतानि विरहिता भवंति बुद्धदर्शनेन धर्मश्रवणेन बोधिसत्त्वदर्शनेन[3] धर्मसांकथ्यविनिश्चयेन सर्वकुशलमूलेन धर्मचर्याभिश्च। किंचापि ते[5] तत्र नाभिरमंते[6] न तुष्टिं विजानंति[7]। अपि तु खलु पुनः पूर्वापरान्क्षमयित्वा ते भूयस्ततः पश्चान्निष्क्रामंति। न[8] चैषां ततो

[1] ज्ञान A B P  ज्ञान समसमज्ञान C  नमसमसमज्ञान ते किंचापि P  [2] तेन च चित्तप्रसादमत्रेनात्र सुखावत्यां कधातावूपद्यन्ते A  तेन च चित्तप्रसादमात्रेणात्र सुखावत्या लोकधातावुपपद्येन्ते B  ते च ने चित्तप्रसादमत्रेनात्र सुखावत्या लोकधातावूपद्यन्ते C  तेन च चित्तप्रसादमात्रेनात्र सुखावत्या लोकधातावूपपद्यन्ते P  तेन च चित्तप्रसादमात्रेण अत्र सुखावत्यां लोकधातावूपपद्यन्ते P  [3] Here A and C repeat धर्मश्रवणेन बोधिसत्त्वदर्शनेन  [4] Here between चित्त and चि, C repeats the following: विरहिता भवंति बुद्धदर्शनेन धर्मश्रवणेन बोधिसत्त्वदर्शनेन धर्मश्रवणेन बोधिसत्त्वदर्शनेन धर्मसांकथ्यविनिश्चयेन सर्वकुशलमूलेन धर्मचर्याभिश्च किंचा  [5] ते deest in P  [6] नास्ति रमन्ते A. B C P  [7] विजानंति A B. C  विजानति P  [8] र B

निष्क्रामतां[1] निष्क्रमः प्रज्ञायत[2] ऊर्ध्वमधस्तिर्यग्वा । पश्याजित एतर्हि नाम पंचभिर्वर्षशतैर्बहूनि बुद्धकोटीनियुतशतसहस्रोपस्थानानि स्युर्बह्वपरिमाणासंख्येयाप्रमेयाणि च कुशलमूलान्यवरोपयितव्यानि[3]। तत्सर्वं[6] विचिकित्सादोषेण विनाशयंति। पश्याजित कियन्महत्तेऽनर्थाय[7] बोधिसत्त्वानां विचिकित्सा[8] संवर्तत इति। तस्मात्तर्ह्यजित बोधिसत्त्वैर्निर्विचिकित्सैर्बोधये चित्तमुत्पाद्य क्षिप्रं सर्वसत्त्वहितसुखाधानाय सामर्थ्यप्रतिलंभार्थं सुखावत्यां लोकधातावुपपत्तये कुशलमूलानि परिणामयितव्यानि यत्र भगवानमितभस्तथागतोऽर्हन्सम्यक्संबुद्धः ॥४१॥

एवमुक्तेऽजितो बोधिसत्त्वो भगवंतमेतदवोचत् । किं पुनर्भगवन्बोधिसत्त्वा इतो बुद्धक्षेत्रात्परिनिष्पन्ना अन्येषां वा[10] बुद्धानां भगवतामंतिकात्सुखावत्यां लोकधातावुत्पत्स्यंते । भगवानाह । इतो ह्यजित बुद्धक्षेत्राद्द्वासप्ततिकोटीनियुतानि बोधिसत्त्वानां परिनिष्पन्नानि यानि सुखावत्यां लोकधातावुपपत्स्यंते परिनिष्पन्नानामवैवर्तिकानां बहुबुद्धकोटीनियुतशतसहस्राण्यवरोपितैः कुशलमूलैः कः पुनर्वादस्ततः परीत्ततरैः कुशलमूलैः ।

[1] निष्क्रामतां deest in B [2] प्रज्ञायते । A B प्रज्ञायेते । C प्रज्ञायते: P [3] स्यात्सुप A B C स्यात्सुप P [4] ना deest in A C P [5] तथा: in all MSS [6] सर्वे in all MSS [7] कियत्महत्ते नर्थाय A कियत्महते नार्थाय B कियत्महत्त नर्थाय C, p कियत्महते नाथाय P [8] त्सां C [9] सामर्थ्ये A C P सामर्थे प्र B [10] वा deest in B. [11] नि P न A B C The MSS constantly vary between नयुत and नियुत, after कोटी or कोटि. I have preferred नियुत and कोटी throughout this text

१दुष्प्रसहस्य[1] तथागतस्यांतिकादष्टादशकोटीनियुतशतानि बोधिसत्त्वानां सुखावत्यां लोकधातावुपपत्स्यंते । पूर्वोत्तरे दिग्भागे २रत्नाकरो नाम तथागतो विहरति । तस्यांतिकान्नवतिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ३ज्योतिष्प्रभस्य तथागतस्यांतिकाद्द्वाविंशतिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ४अमितप्रभस्य तथागतस्यांतिकात्पंचविंशतिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ५लोकप्रदीपस्य तथागतस्यांतिकात्षष्टिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ६नागाभिभुवस्तथागतस्यांतिकाच्चतुःषष्टिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ७विरजःप्रभस्य तथागतस्यांतिकात्पंचविंशतिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ८सिंहस्य[2] तथागतस्यांतिकात्षोडशबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । ९सिंहस्य तथागतस्यांतिकादष्टादशबोधिसत्त्वसहस्राणि[3] सुखावत्यां लोकधातावुपपत्स्यंते । १०श्रीकूटस्य तथागतस्यांतिकादेकाशीतिबोधिसत्त्वकोटीनियुतानि सुखावत्यां लोकधातावुपपत्स्यंते । ११नरेंद्रराजस्य तथागतस्यांतिकाद्दशबोधिसत्त्वकोटीनियुतानि सुखावत्यां लोकधातावुपपत्स्यंते । १२बलाभिज्ञस्य तथागतस्यांतिकाद्द्वादशबोधिसत्त्वसहस्राणि सुखावत्यां लोकधातावुपपत्स्यंते । १३पुष्पध्वजस्य

[1] दुष्प्रसहस्या A °स्य B C. दुष्प्रसहस्य P. [2] सिंहस्य deest in P [3] बोधिसत्वकोट्यः सहस्राणि B, probably बोधिसत्त्वकोट्यः or बोधिसत्त्वकोटीनियुतसहस्राणि ।
[4] Probably कोटी is left out, from सहस्राणि to श्रीकूटस्य बोधिसत्त्व left out in P.

तथागतस्यांतिकात्पंचविंशतिर्वीर्यप्राप्ता बोधिसत्त्वकोट्य एकमस्थानप्रस्थिता एकेनाष्टाहेन नवतिंकल्पकोटीनियुतशतसहस्राणि पश्चान्मुखीकृत्य[2] सुखावत्यां लोकधातावुपपत्स्यंते। १४ज्वलनांधिपतेस्तथागतस्यांतिकाद्द्वादशबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंते । १५वैशारद्यप्राप्तस्य तथागतस्यांतिकादेकोनसप्ततिबोधिसत्त्वकोट्यः सुखावत्यां लोकधातावुपपत्स्यंतेऽमिताभस्य तथागतस्य दर्शनाय वंदनाय पर्युपासनाय परिपृच्छनाय परिप्रश्नीकरणाय। एतेनाजित पर्यायेण परिपूर्णकल्पकोटीनियुतं[5] नामधेयानि परिकीर्तयेयं तेषां तथागतानां येभ्यस्ते बोधिसत्त्वा[6] उपसंक्रामंति सुखावत्यां लोकधातौ तममिताभं तथागतं द्रष्टुं वंदितुं पर्युपासितुं न शक्यश्च पर्यंतोऽधिगंतुं ॥४२॥

पश्याजित कियत्सुलब्धलाभास्ते सत्त्वा येऽमिताभस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य नामधेयं श्रोष्यंति नापि ते सत्त्वा हीनाधिमुक्तिका भविष्यंति येऽंतश एकचित्तप्रसादमपि तस्मिंस्तथागतेऽभिलप्स्यंत अस्मिंश्च धर्मपर्याये। तस्मात्तर्ह्यजित आरोचयामि वः प्रतिवेदयामि सदेवकस्य लोकस्य पुरतोऽस्य धर्मपर्यायस्य श्रावणाय। त्रिसाहस्रमहासाहस्रमपि लोकधातुमग्नि-

[1] एनाष्टाहे नवनवति A. एताष्टाहे नवनति B. एकेनाष्टाहे नवनरति C. एकेनाष्टाहे नवति P [2] पश्चात्सुखीकृत्य येन A. B पश्चात्सुखीकृत्य येन C पश्चा मुखिकृत्य याः P. [3] ज्वलना A B. C. ज्वलना P. [4] परि deest in A B [5] नयुत in all MSS. [6] यस्मात्ते बोधिसत्वानां A. यस्ते° B. यस्यस्ते बोधिसत्वा C. यस्तेस्ते बोधिसत्त्वाः P. [7] या deest in A B C. [8] P. adds परि after अग्नि.

पूर्णमवगाह्यातिक्रमैकचित्तोत्पादमपि[1] प्रतिसारो न कर्तव्यः । तत्कस्य हेतोः । बोधिसत्त्वकोट्यो ह्यजिताश्रवणादेषामेवंरूपाणां धर्मपर्यायाणां विवर्तन्तेऽनुत्तरायाः सम्यक्संबोधेः । तस्मादस्य धर्मपर्यायस्याध्याशयेन श्रवणोद्ग्रहणधारणार्थं पर्यावाप्तये विस्तरेण संप्रकाशाय[2] भावनार्थं च सुमहद्वीर्यमारब्धव्यं[3] । अंतश एकरात्रिं दिनमप्येकगोदोहमात्रमप्यंतशः पुस्तकावरोपितं कृत्वा[4] सुलिखितो धारयितव्यः । शास्तृसंज्ञा च तत्रोपाध्याये[5]कर्तव्ये-च्छति[6] क्षिप्रमपरिमितान्सत्त्वानवैवर्तिकत्वेऽनुत्तरायाः सम्यक्संबोधेः प्रतिष्ठापयितुं तच्च[7] तस्य भगवतोऽमिताभस्य तथागतस्य बुद्धक्षेत्रं [8]द्रष्टुमात्मनश्च विशिष्टां बुद्धश्रीगुणालंकारव्यूहसंपदं परिग्रहीतुमिति ॥ अपि तु खल्वजितात्यर्थं सुलब्धलाभास्ते सत्त्वा अवरोपितकुशलमूलाः पूर्वजिनकृताधिकारा बुद्धाधिष्ठिताश्च भविष्यंति येषामनागतेऽध्वनि यावत्सद्धर्मविप्रलोपे[10] वर्तमान इम एवंरूपा[11] उदारा[12] धर्मपर्यायाः सर्वबुद्धसंवर्णिताः सर्वबुद्धप्रशस्ताः सर्वबुद्धानुज्ञाता महतः[13] सर्वज्ञज्ञानस्य क्षिप्रमाहा-

[1] क्रमित्तो A, C क्रमचित्तो B क्रमैकचित्तो P [2] सप्रकाशये in all MSS., probably सप्रकाशनाय as in P [3] सुमहद्वीयमारभ्यथ्य। A सुमहद्वीर्यमालब्धव्य। B °रभ्य। C सुमहद्वीर्यमारद्धव्य P [4] ता कृत्वा A C ता कुत्सा B त अपि कृत्वा P [5] कर्तव्या deest in P [6] इच्छद्भि A B C इच्छति P may be meant for a locat ve referring to उपाध्याये, or for स इच्छति [7] च deest in C [8] ते च A B तेन च C त च P [9] द्रष्टु P [10] विप्रलापे A विप्रत्यपे B विप्रलाप C विप्रलाप्य P But cf Vagrakkhedikâ p 30 l 14 भविष्यंत्यनागतेऽध्वनि °सद्धर्मविप्रलोपे वर्तमाने [11] इममेवरूपा A B C °पा P [12] रा deest in C [13] तामर्हंत A C ता n सर्हेत B ता P leas ng महत

रकाः श्रोत्रावभासमागमिष्यंति ये श्रुत्वा चोदारप्रीतिप्रामोद्यं[2] प्रतिलप्स्यंत उद्ग्रहीष्यंति धारयिष्यंति वाचयिष्यंति पर्यवाप्स्यंति परेभ्यो विस्तरेण संप्रकाशयिष्यंति भावनाभिरताश्च भविष्यंत्यंतशो लिखित्वा पूजयिष्यंति बहु[3] च ते पुण्यं प्रसविष्यंति यस्य न सुकरा संख्या कर्तुं ॥ इति ह्यजित यत्तथागतेन कर्तव्यं कृतं मया। युष्माभिरिदानीं[4] निर्विचिकित्सायोगः करणीयः। मा संशयता-संगमनावरणं बुद्धज्ञानं[5] मा भूत्सर्वाकारावरोपितरत्नमये बंधनागारे प्रवेशः। दुर्लभो ह्यजित बुद्धोत्पादो दुर्लभा धर्मदेशना दुर्लभा क्षणसंपत्। आख्याता चाजित मया सर्वकुशलमूलपार-मिताप्राप्तिः। यूयमिदानीमभियुज्यत प्रतिपद्यध्वं। अस्य खलु पुनरजित धर्मपर्यायस्य महतीं परींदनां करोमि। अविप्रणाशाय बुद्धधर्माणामनंतर्धानाय[9] पराक्रमिष्यथ मा तथागताज्ञां क्षोभयिष्यथ ॥४३॥

अथ खलु पुन[10]र्भगवांस्तस्यां वेलायामिमा गाथा अभाषत[11]।

न मे अकृतपुण्यानां श्रवा[12] भेष्यंति[13] ईदृशाः।
ये तु ते शूर सिद्धार्थाः श्रोष्यंति च इमां गिरं ॥१॥

[1] श्रोता A B C श्रोत्रा P. [2] द्यं A. B C द्ये P. [3] । विपहू A. । बहूनि B. । बाहू C ॥ बहू P. [4] यस्माभिरिदानीं A यस्माभिरिदौनो B °दानी C यस्माभिदानीं P [5] ज्ञे A B C ज्ञ P [6] बुद्धज्ञान A B. C पुण्यं P. [7] कारवरो A B. C कारोवरो P [8] परीं B [9] धर्माणामंतर्धान A C धर्मा मंतर्धान B. धर्मानामंतर्धानाय P [10] पुनर् deest in C P [11] सां गाथामभाषत A. B. मा गाथा अभाषत C. P [12] श्रवा A [illegible] P. श्राश्रवा B. [13] भेष्यंति A. B. C. भविष्यंति P

दृष्टो यैश्च हि संबुद्धो लोकनाथ प्रभंकरः।
सगौरवैः श्रुतो धर्मः प्रीतिं प्राप्स्यंति ते परां ॥२॥
न शक्र हीनेहि कुसीददृष्टिभिः।
बुद्धान[2] धर्मेषु प्रसाद विंदितुं[3]।
ये बुद्धक्षेत्रेषु[4] अकार्षि पूजां।
त्रैलोकनाथान[5] चर्यासु शिक्षिषु ॥३॥
यथांधकारे पुरुषो ह्यचक्षुः।
मार्गं न[7] जाने कुतु संप्रकाशयेत्।
सर्वं तथा श्रावक बुद्धज्ञाने।
अजानकाः किं पुनरद्य सत्त्वाः ॥४॥
बुद्धो[9] हि बुद्धस्य गुणां प्रजानते।
न देवनागासुरयक्षश्रावकाः।
अनेकबुद्धान पि नो गती[10] यथो।
बुद्धस्य ज्ञाने हि प्रकाश्यमाने ॥५॥
यदि सर्वसत्त्वाः समता[11] भवेयुः।
विशुद्धज्ञाने[12] परमार्थकोविदाः।
ते कल्पकोटीरथ वापि उत्तरे।
नैकस्य बुद्धस्य गुणान्कथयेयुः ॥६॥

[1] शीद् A. B. C. सिद्ं P. [2] बुद्दे A. C. बुद्ध B. बुद्धा P. [3] चिंदिंतुं P.
[4] बुद्धपूजेषु A. C. बुद्धेषु B. बुद्धपूजे P. [5] त्रैलो A. त्रैधा B. ते लो C. न लो P.
[6] नाथान् B. P. नाथांन C. [7] नु P. [8] कु संप्र P. [9] From बुद्धो to सर्वसत्त्वाः left out in P. [10] नर गती B [11] समंता P. [12] न P. मार, see chap. 25

अथांतरे निर्वृत ते भवेयुः ।
प्रकाशमाना वहुकल्पकोटीः ।
न च बुद्धज्ञानस्य प्रमाणु लभ्यते ।
तथा हि ज्ञानाश्चर्य[1] जिनानां ॥७॥
तस्मान्नरः पंडित विज्ञजातियः[3] ।
यो मह्य वाक्यमभिश्रद्दधेय[4] ।
कृत्स्नां स[5] साक्षाज्जिनज्ञानमार्गान्[7] ।
बुद्धः[8] प्रजानं ति[9] गिरामुदीरयेत् ॥८॥
कदाचि [10]लभ्यति मनुष्यलाभः ।
कदाचि [11]बुद्धान पि प्रादुर्भावः ।
श्रद्धार्थप्रज्ञा सुचिरेण लभ्यते ।
तस्यार्थप्राप्ति जनयेत[12] वीर्यं ॥९॥
य[13] ईदृशां[14] धर्म श्रुणित्व श्रेष्ठां ।
लभ्यंति प्रीतिं सुगत स्मरंतः ।
ते मित्रमस्माकमतीतमध्वनि ।
ये चापि बोधाय[15] जनंति छंदमिति ॥१०॥४४॥

अस्मिन्खलु पुनर्धर्मपर्याये भाष्यमाणे द्वादशानां सत्त्वनियु-

[1] ज्ञानाश्चर्यं A. ज्ञानान्याश्चर्यं B. ज्ञानाश्चर्यं C. ज्ञानाय P Scan ⏑–⏑–––⏑⏑–⏑––.
[2] ह B. [3] य A. B. यः C. P. [4] यु A C. युः B. यः P. [5] –त्स्नां य A. –त्स्नाय C. ज्योत्स्नां स B. कृष्णाम P. [6] साक्षि जिन P. [7] मार्गान् A. B. मार्गां न C. राशिं न P.
[8] बुद्धः A. B C. बुद्ध P. [9] जानति A. C. जानंति B. जाति P. [10] ह A. B. ल C. र P. भ्येत? [11] ह्न A. C [12] याति P. [13] ये B. [14] सा P.
[15] ये बोधाय A C. ये चापि बोधाये B. ये बुद्धबोधाय P.

तकोटीनां विरजो विगतमलं धर्मेषु[1] धर्मचक्षुर्विशुद्धं। चतुर्विंशत्या कोटीनियुतशतफलं[3] प्राप्तं[4]। अष्टानां भिक्षुशतानामनुपादायाश्रवेभ्यश्चित्तानि विमुक्तानि। पंचविंशत्या बोधिसत्त्वकोटीभिरनुत्पत्तिकधर्मक्षांतिः प्रतिलब्धा। देवमानुषिकायाश्च प्रजायाश्चत्वारिंशत्कोटीनियुतशतसहस्राणामनुत्पन्नपूर्वाण्यनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि सुखावत्यां [6]लोकधातावुपपत्तये च कुशलमूलान्यवरोपितानि भगवतोऽमिताभस्य तथागतस्य [7]दर्शनकामतया। सर्वे च ते तत्रोपपद्यानुपूर्वेण[8] मंजुस्वरा नाम तथागता अन्येषु लोकधतुषूपपत्स्यंते। अशीतिश्च नियुतकोट्यो दीपंकरे तथागते[9] लब्धक्षांतिका अवैवर्तिका अनुत्तरायाः[10] सम्यक्संबोधेरमिताभुषैव[11] तथागतेन[12] परिपाचिताः[13] पूर्वबोधिसत्त्वचर्यां चरंतस्ताश्च[14] सुखावत्यां लोकधातावुपपद्य पूर्वप्रणिधानचर्याः परिपूरयिष्यंति ॥४५॥

तस्यां वेलायामयं त्रिसाहस्रमहासाहस्रलोकधातुः[15] षड्विकारं

[1] धर्मेषु deest in B [2] षि B. [3] शत and लं left out in P. [4] This passage seems to be imperfect, and, according to the five Chinese translations, we expect चतुर्विंशत्या सत्त्वकोटीनियुतशतसहस्रैरनागामिफलं प्राप्तं। The number differs in the five translations between 200 kotis, 220 kotis, 22 kotis, 20 kotis, and 22 koti niyutas respectively; but they all agree in the Anâgâmi-phala [5] प्रजायाश्च deest in P. [6] लोकधातावु deest in P. [7] दर्शना A C. दर्शाय B दर्शन P. [8] नुपूर्वेण A नुपूर्वेण B नुपूर्वं पंत C. P. [9] दीपंकर तथागत A B. दीपंकर तथागते C. दीपंकरे तथागतते P. [10] याः deest in C. [11] षैव A षैष B. षैषै C षष P. [12] C. adds न after °तेन. [13] परिपाचिताः A. C. P परिपाचिताः B [14] तांश्च A. C P. ताश्च B. [15] शो A. P ष B C

प्राकंपत्। विविधानि च प्रातिहार्याणि संदृश्यंते स्म। पृथिव्यां संस्कृतमभूत् दिव्यमानुष्यकानि च तूर्याणि संप्रवादितान्यभूवन्। अनुमोदनाशब्देन च यावदकनिष्ठभवनं विज्ञप्तमभूत्॥४६॥

इदमवोचद्भगवानात्तमना अजितो बोधिसत्त्वो महासत्त्व आयुष्मांश्चानंदः सा च सर्वावती पर्षत्सदेवमानुषासुरगरुडगंधर्वश्च लोको भगवतो भाषितमभ्यनंदन्निति॥४७॥

[1]भगवतोऽमिताभस्य तथागतस्य सुखावतीगुणवर्णपरि-

[1] From here the text is given from A, the various readings will be seen below

A भगवतोऽमिताभस्य तथागतस्य सुखावतीगुणवर्णपरिकीर्तन बोधिसत्त्वानामवैवर्त्यभूमिप्रवेश ॥
B श्रीभगवतोऽमिताभस्य तथागतस्य सुखावतीगुणवर्णपरिकीर्तन बोधिसत्त्वानामवैवर्त्यभूमिप्रवेश ॥
C भगवतोऽमिताभस्य तथागतस्य गुण परिकीर्तनं बोधिसत्त्वानामवैवर्त्यभूमिप्रवेश ॥
P भगवतो मिताभस्य तथागतस्य गुन परिकीर्तन बोधिसत्त्वानामवैवर्त्यभूमिप्रवेश ॥

A अमिताभस्य परिवर्त सुखावतीव्यूह
B अमिताभस्य परिवर्त सुखावतीव्यूह
C अमिताभस्य परिवर्तं सुखावतीव्यूह सपूर्ण ॥ ॥ इति श्रीमदमिताभस्य तथागतस्य सुखा
P अमिताभस्य व्यूहपरिवर्तं सुखावतीव्यूह सपूर्ण ॥ ॥ इति श्री अमिताभस्य सुखा

A महायानसूत्र समाप्त ॥ ये धर्मा हेतुप्रभावा हेतु तेषा तथागत ।
B महायानसूत्र समाप्त ॥ य धर्मा हेतुप्रभावा हेतु तेषा तथागत ।
C वतीव्यूह महायानसूत्र समाप्त ॥ ॥ शुभंम् ॥
P वतीव्यूह नाम महायानसूत्र समाप्त ॥

A ह्यवदत्तेषा च यो निरोध एव वादि महाश्रमण ॥ ॥ संवत् ९३४ कार्तिकशुदि ४
B ह्येवद तेषा च यो निरोध एव वादि महाश्रमण ॥ ९६०।
C
P संवत् ९५५ मिति चैत्र शुक्र ८ हु

कीर्तनं[1] बोधिसत्त्वानामवैवर्त्यभूमिप्रवेशः। अमिताभस्य परिवर्तः सुखावतीव्यूहमहायानसूत्रं समाप्तं ॥

ये धर्मा हेतुप्रभावा हेतुं तेषां तथागतः।
ह्यवदत्तेषां च यो निरोध एवं वादि महाश्रमणः ॥

A. संपूर्णमभूत् ॥ श्रीसुवर्णपणारिमहानगरे मैत्रीपुरिमहाविहारे श्रीवाक्यवज्रदासवज्राचार्यस्य
B
C.
P समैत्रिपूरमहाविहारया श्री वज्राचार्य रा-

A. जयानंदस्य च सर्वार्थसिद्धेः ॥ ॥ संसारमोक्षहेतौ स्वपापमुक्तये स्वेनैव लिखितं शुभं ॥
B.
C.
P. जधं मुनिन चो चानुलो शुभ ॥

[1] न A. [2] त्व A.

# APPENDIX I.

SAṄGHAVARMAN'S CHINESE VERSION OF THE FOUR GÂTHÂS IN THE SUKHÂVATÎVYÛHA (CHAPTERS 4, 9, 31, 44), WITH A LITERAL TRANSLATION.

## 1. SANSKRIT TEXT, Chapter 4, pages 7–9.

光[1]顏巍巍 威神無極 如是燄明 無與等者

日月摩尼 珠光燄耀 皆悉隱蔽 猶若聚墨

如[2]來容顏 超世無倫 正覺大音 響流十方

戒聞精進 三昧智慧 威德無侶 殊勝希有

1. O thou of eminent and bright countenance, whose power is endless, such a brightness as this is incomparable (in the world)! The brightness of the sun, moon, jewels, and pearls is all to be covered (as it were) just as a heap of black powder[a].

2. The form of the Tathâgata is without an equal in the world, and the great voice of the fully-enlightened one reverberates in the ten quarters. His virtue, knowledge, strength, meditation, wisdom, power, and good qualities are matchless, most excellent and rare.

---

[a] 'Black powder' looks as if the Chinese translator had read mashi or masi for bhosi, see Vagrakkhedikâ, p 44, l 14

3. Deeply and clearly, well and intensely, he thinks of the law of the Buddhas, (incomprehensible) like the sea, and understands its depth and greatest profoundness, and reaches its bottom. Bhagavat (i.e. honoured by the world) is ever free from ignorance, covetousness, and anger. O Hero, like a lion, whose spiritual virtue is immeasurable!

4. His merit is great and wide, his wisdom is deep and wonderful, and his light and powerful form cause the universe to be shaken[a]. May I become a Buddha just as the holy king of the law, and deliver all beings from birth and death!

5. In generosity, equanimity, virtue, endurance, strength, also in meditation and wisdom, I shall become the best. Practising perfectly these vows I shall become a Buddha, the great helper of all those who have fear and anxiety.

深[3]諦善念 諸佛法海 窮深盡奥 究其涯底 無明欲怒 世尊永無

人雄師子 神德無量 功[4]勳廣大 智慧深妙 光明威相 震動大千

願我作佛 齊聖法王 過度生死 靡不解脫 布[5]施調意 戒忍精進

如是三昧 智慧爲上 吾誓得佛 普行此願 一切恐懼 爲作大安

[a] This would point to prakampatu for pratapatu

6. There may be a hundred thousands of millions of Buddhas—immeasurably great sages, whose number is as that of the sand of the Gaṅgâ. To worship all these Buddhas does not equal the seeking for the way firmly and rightly without returning.

7. There are the worlds of the Buddhas like the sand of the Gaṅgâ. These (Buddha-) countries are innumerable and countless. My light will shine over all these countries; thus my strength and power will be immeasurable.

8. May my country be the best (of all), when I become a Buddha, and the people, therein excellent, and the Bodhi-ma*nd*ala surpassing others. May my country be just as (the state of) Nirvâ*n*a, and without equal. I will pity and deliver all (beings).

9. May those who come to be born there from the ten quarters be pure and joyful, happy and at ease, when they arrive in my country. May

假[6]使有佛 百千億萬 無量大聖 數如恒沙 供養一切 斯等諸佛 不如求道

堅正不卻 譬[7]如恒沙 諸佛世界 復不可計 無數刹土 光明悉照 徧此諸[illegible]

如是精進 威神難量 令[8]我作佛 國土第一 其衆奇妙 道場超絕 國如泥洹

而無等雙 我當哀愍 度脫一切 十[9]方來生 心悅清淨 已到我國 快樂安穩

Buddha witness that this is my true realisation! I make prayer for that desire full of strength and vigour

10 May those Bhagavats of the ten quarters whose wisdom is unimpeded know always my thought and practice! Even if I abide in the midst of poisons and pains I shall always practise strength (vîrya) and endurance (kshânti) and be free from regret

幸佛信明　是我眞證　發願於彼
力精所欲　十[10]方世尊　智慧無礙
常令此尊　知我心行　假令身止
諸苦毒中　我行精進　忍終不悔

## 2 Sanskrit Text Chapter 9 pages 22–24

1 If these prayers surpassing the world which I have made and by which I should certainly attain to the highest path should not be fulfilled may I not accomplish the perfect knowledge

2 If I should not become a great giver so as to save all the poor, for immeasurable kalpas may I not accomplish the perfect knowledge

我[1]建超世願　必至無上道
斯願不滿足　誓不成正覺
我[2]於無量劫　不爲大施主
普·濟諸貧苦　誓不成正覺

3. If my name should not be heard all over the ten quarters, when I attain to the path of Buddha, may I not accomplish the perfect knowledge.

4. May I become the teacher of gods and men, having sought for the highest path, by generosity, deep and right meditation, pure wisdom and practising the pure practice (Brahma-*k*aryâ)[a].

5. The great light produced by the spiritual power (of the Tathâgata) shines over unlimited countries, and destroys the darkness of three (kinds of) defilements, and saves all beings from misfortune.

6. Opening his eye of wisdom, he (the Tathâgata) destroys that darkness of ignorance like a blind man Shutting up all the evil paths, he opens the gate of the good state.

我[3]至成佛道　名聲超十方　究竟靡所聞　誓不成正覺

離[4]欲深正念　淨慧修梵行　志求無上道　爲諸天人師

神[5]力演大光　普照無際土　消除三垢冥　廣濟衆厄難

開[6]彼智慧眼　滅此昏盲闇　閉塞諸惡道　通達善趣門

---

[a] Bodhiru*k*i translates this verse as follows 'If I should still seek for the object of desire, after I left home in order to advance towards the highest path, and should not practise meditation and wisdom, may I not become the charioteer (of men whose passions are to be tamed) and the teacher of gods and men.'

7 Having accomplished his actions, his powerful light is brilliant over the ten quarters, so that the sun and moon do not shine, and the light of the sky becomes invisible

8 Opening the treasury of the law for the sake of a multitude he widely distributes the jewels of merit, and in the midst of a large assembly, he constantly preaches the law as a lion roars

9 Having worshipped all Buddhas he has made the stocks of merit perfect His prayers and wisdom having been perfect he has become the hero of the three worlds

10 Like Buddha who is possessed of unimpeded wisdom and understands and shines over everything may I also be possessed of the power of action and wisdom and equal this highest worthy

11 If this prayer should ever be fulfilled, the great-thousand (world) would be moved and the heavenly beings in the sky would shower down the wonderful and precious flowers

功[7]祚成滿足
威曜朗十方
日月戢重暉
天光隱不現
爲[8]衆開法藏

廣施功德寶
常於大衆中
說法師子吼
供[9]養一切佛
具足衆德本

願慧悉成滿
得爲三界雄
如[10]佛無礙智
通達靡不照
願我功慧力

等此最勝尊
斯[11]願若剋果
大千應感動
虛空諸天人
當雨珍妙華

12. Buddha spoke to Ânanda: When the Bhikshu Dharmâkara spoke these verses, the whole earth was shaken in six different ways, and the heaven showered the wonderful flowers over it; and there was music spontaneously in the sky, in which this praise was produced: 'Thou wilt certainly accomplish the highest perfect knowledge[a].'

佛[12]告阿難法藏比丘說此頌已應時普地六種震動天雨妙華以散其上自然音樂空中讚言決定必成無上正覺

8. Sanskrit Text, Chapter 31, pages 49-54.

1. There are Buddha-countries in the eastern quarter, the number of which equals the sand of the river Ganges. The company of Bodhisattvas of those countries goes to see Buddha Amitâyu.

東[1]方諸佛國 其數如恒沙
彼土菩薩衆 往覲無量覺

2. Thus also in the south, west, north, zenith, and nadir, and in the four corners (there are the same) The company of Bodhisattvas of those countries goes to see Buddha Amitâyu.

南[2]西北四維 上下亦復然
彼土菩薩衆 往覲無量覺

[a] In the fourth and fifth of the five Chinese translations which are still in existence, this part is translated as a verse, as it is in Sanskrit, while in the first and second translations, these 12 verses are altogether left out.

3. All the Bodhisattvas, each bringing with him wonderful heavenly flowers, precious scents, and invaluable cloaks, worship Buddha Amitâyu.

4. All of them play on the heavenly music, from which an agreeable sound proceeds, singing and praising the most excellent worthy; thus they worship Buddha Amitâyu.

5, 6. He has finally obtained his supernatural power and wisdom, and easily entered the deep gate of the law. He has made the treasury of merit perfect, and his wonderful wisdom is without equal. The sun of his wisdom shines over the world, and dispels the cloud of birth and death. (Thus praising him), they (the Bodhisattvas) turn round him three times respectfully, and salute the highest worthy, touching the ground with their heads

7. Having seen that pure and adorned country, which is excellent and inconceivable, they raise their thoughts, praying that their own country should also be like this. (See verse 6 in Sanskrit)

[3] 一切諸菩薩　各齎天妙華　寶香無價衣　供養無量覺
[4] 咸然奏天樂　暢發和雅音　歌歎最勝尊　供養無量覺
[5] 究達神通慧　遊入深法門　具足功德藏　妙智無等倫
[6] 慧日照世間　消除生死雲　恭敬繞三帀　稽首無上尊
[7] 見彼嚴淨土　微妙難思議　因發無上心　願我國亦然

8. Then the Lord Amitâyu changes his countenance and smiles, and shines over the countries of the ten quarters, producing innumerable (rays of) light from his mouth. (See verse 11.)

9. Turning back his light, he causes it to turn round his body three times and to enter into (his person) from the top of his head. All the assembly of gods and men are dancing with joy. (See verse 12.)

10. The noble-minded Avalokitesvara, making his cloak proper, touching the ground with his head, asks him, saying: 'Why dost thou smile? Pray, tell me thy thoughts.'

11. The Brahma-voice (of Buddha) is like thunder, and produces a wonderful ringing sound, with eight different kinds of sound (saying). 'I shall give prophecy to the Bodhisattvas, and tell thee now;—do thou listen carefully!

12. 'I know thoroughly well the wishes of those noble-minded ones who come from the ten quarters, that they seek for a pure and adorned country, and that, having received prophecy, they will become Buddha.

應[8]時無量尊
動容發欣笑
口出無數光
徧照十方國
迴[9]光圍繞身
三帀從頂入
一切天人衆
踊躍皆歡喜
大[10]士觀世音
整服稽首問
白佛何緣笑
唯然願說意
梵[11]聲猶雷震
八音暢妙響
當授菩薩記
今說仁諦聽
十[12]方來正士
吾悉知彼願
志求嚴淨土
受決當作佛

18 'If beings, having heard his name, wish to be born in his country, they will arrive there through the power of the former prayers of that Buddha (Amitâyu) and spontaneously attain to the state of "never returning again" (Avaivartya)'

其[18]佛本願力
自致不退轉
普念度一切
飛化徧諸刹

19 The Bodhisattvas raise their prayers and pray that their own country should have no difference (from Sukhâvatî) They think intensely of saving all beings and making their name to be heard in the ten quarters

聞名欲往生
菩[19]薩興至願
名顯達十方
恭敬歡喜去

20 Having worshipped a million of Tathâgatas, and gone to their countries through their supernatural power and joyfully worshipped them there, they (the Bodhisattvas) return to the country of Sukhâvatî

皆悉到彼國
願己國無異
奉[20]事億如來
還到安養國

4 SANSKRIT TEXT Chapter 44, pages 73-75

1 If men have no stock of merit, they are not able to hear this Sûtra Those who are pure and keep the moral precepts are able to hear the right law

若[1]人無善本
不得聞此經
清淨有戒者
乃獲聞正法

2 Those who have formerly seen Bhagavat, are able to believe in this matter They will hear and practise (this law) respectfully and without pride, and skip for great joy

3 Those who are either proud, vicious, or neglectful, find it difficult to believe in this law Those who have seen Buddhas in former life, willingly hear such a teaching as this

4 Neither *S*râvakas nor Bodhisattvas are able to understand the holy thought (of Buddha), because it is just as if a man, blind from his birth wishes to go to lead others

5 The sea of wisdom of the Tathâgata is deep and wide unlimited and bottomless so that neither *S*râvakas nor Pratyekabuddhas can measure it but Buddha only understands it clearly

6 7 Let even all men who may have perfectly attained to the Bodhi, and understood the sublime truth being possessed of pure wisdom, think of the wisdom of Buddha for a million

曾[2]更見世尊 則能信此事 謙敬聞奉行 踊躍大歡喜 憍[3]慢弊懈怠

難以信此法 宿世見諸佛 樂聽如是教 聲[4]聞或菩薩 莫能究聖心

譬如從生盲 欲行開導人 如[5]來智慧海 深廣無涯底 二乘非所測

唯佛獨明了 假[6]使一切人 具足皆得道 淨慧知本空 億劫思佛智

of kalpas, and use their utmost power in their speech and explanation, yet they will not know the unlimitedness of Buddha's wisdom till the end of their life. Thus it is perfectly pure.

8. This life is very difficult to be obtained, and the appearance of Buddha in the world is also difficult to be met with, and men who have faith and wisdom are difficult (to be found); so that if they hear (this law), they must diligently seek for it.

9. If they, having heard the law, do not forget it, and having perceived (its deep meaning) respect it, and having obtained (its essence) rejoice greatly, they are my good and intimate friends. Therefore they ought to raise their own thoughts (for obtaining the Bodhi).

10. Even if the world is full of fire, yet they ought certainly to pass through it, and seek to hear the law. They will then certainly attain to the path of Buddha, and widely save (those who are in) the stream of birth and death.

7 窮力極講說 盡壽猶不知 佛慧無邊際 如是致清淨

8 壽命甚難得 佛世亦難值 人有信慧難 若聞精進求

9 聞法能不忘 見敬得大慶 則我善親友 是故當發意

10 設滿世界火 必過要聞法 會當成佛道 廣濟生死流

# APPENDIX II.

## THE SMALLER SUKHÂVATÎ-VYÛHA[1].

॥ नमः सर्वज्ञाय ॥

एवं मया श्रुतं। एकस्मिन्समये भगवाञ्छ्रावस्त्यां विहरति स्म जेतवनेऽनाथपिंडदस्यारामे महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैरभिज्ञानाभिज्ञातैः स्थविरैर्महाश्रावकैः सर्वैरर्हद्भिः। तद्यथा स्थविरेण च शारिपुत्रेण महामौद्गल्यायनेन च महाकाश्यपेन च महाकप्फिणेन च महाकात्यायनेन च महाकौष्ठिलेन च रेवतेन च शुद्धिपंथकेन च नंदेन चानंदेन च राहुलेन च गवांपतिना च भरद्वाजेन च कालोदयिना च वक्कुलेन चानिरुद्धेन च। एतैश्चान्यैश्च संवहुलैर्महाश्रावकैः संवहुलैश्च बोधिसत्त्वैर्महासत्त्वैः। तद्यथा मंजुश्रिया च कुमारभूतेनाजितेन च बोधिसत्त्वेन गंधहस्तिना च बोधिसत्त्वेन नित्योद्युक्तेन च बोधिसत्त्वेनानिक्षिप्तधुरेण च बोधिसत्त्वेन। एतैश्चान्यैश्च संवहुलैर्बोधिसत्त्वैर्महासत्त्वैः। शक्रेण च देवानामिंद्रेण ब्रह्मणा च सहांपतिना। एतैश्चान्यैश्च संवहुलैर्देवपुत्रनयुतशतसहस्रैः ॥१॥

[1] See Journal of the Royal Asiatic Society, 1880, pp 181-186, Selected Essays, vol ii p 348

तत्र खलु भगवानायुष्मंतं शारिपुत्रमामंत्रयति स्म। अस्ति शारिपुत्र पश्चिमे दिग्भाग इतो बुद्धक्षेत्रं कोटिशतसहस्रं बुद्धक्षेत्राणामतिक्रम्य सुखावती नाम लोकधातुः। तत्रामितायुर्नाम तथागतोऽर्हन्सम्यक्संबुद्ध एतर्हि तिष्ठति ध्रियते यापयति धर्मं च देशयति। तत्किं मन्यसे शारिपुत्र केन कारणेन सा लोकधातुः सुखावतीत्युच्यते। तत्र खलु पुनः शारिपुत्र सुखावत्यां लोकधातौ नास्ति सत्त्वानां कायदुःखं न चित्तदुःखं अप्रमाणान्येव सुखकारणानि। तेन कारणेन सा लोकधातुः सुखावतीत्युच्यते ॥२॥

पुनरपरं शारिपुत्र सुखावती लोकधातुः सप्तभिर्वेदिकाभिः सप्तभिस्तालपंक्तिभिः किंकिणीजालैश्च समलंकृता समंततोऽनुपरिक्षिप्ता चित्रा दर्शनीया चतुर्णां रत्नानां। तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं ॥३॥

पुनरपरं शारिपुत्र सुखावत्यां लोकधातौ सप्तरत्नमय्यः पुष्करिण्यः। तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तस्याश्मगर्भस्य मुसारगल्वस्य सप्तमस्य रत्नस्य। अष्टांगोपेतवारिपरिपूर्णाः समतीर्थकाः काकपेया सुवर्णवालुकासंस्तृताः। तासु च पुष्करिणीषु समंताच्चतुर्दिशं चत्वारि सोपानानि चित्राणि दर्शनीयानि चतुर्णां रत्नानां। तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य। तासां च पुष्करिणीनां समंताद्रत्नवृक्षा जाताश्चित्रा दर्शनीया सप्तानां रत्नानां। तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तस्याश्मगर्भस्य मुसारगल्वस्य सप्तमस्य

रत्नस्य। तासु च पुष्करिणीषु संति पद्मानि जातानि नीलानि नीलवर्णानि नीलनिर्भासानि नीलनिदर्शनानि। पीतानि पीतवर्णानि पीतनिर्भासानि पीतनिदर्शनानि। लोहितानि लोहितवर्णानि लोहितनिर्भासानि लोहितनिदर्शनानि। अवदातान्यवदातवर्णान्यवदातनिर्भासान्यवदातनिदर्शनानि। चित्राणि चित्रवर्णानि चित्रनिर्भासानि चित्रनिदर्शनानि शकटचक्रप्रमाणपरिणाहानि। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं ॥४॥

पुनरपरं शारिपुत्र तत्र बुद्धक्षेत्रे नित्यप्रवादितानि दिव्यानि तूर्याणि सुवर्णवर्णा च महापृथिवी रमणीया। तत्र च बुद्धक्षेत्रे त्रिष्कृत्वो रात्रौ त्रिष्कृत्वो दिवसस्य पुष्पवर्षं प्रवर्षंति दिव्यानां मांदारवपुष्पाणां। तत्र ये सत्त्वा उपपन्नास्त एकेन पुरोभक्तेन कोटिशतसहस्रं बुद्धानां वंदंत्यन्याँल्लोकधातून्गत्वा। एकैकं च तथागतं कोटिशतसहस्राभिः पुष्पवृष्टिभिरभ्यवकीर्य पुनरपि तामेव लोकधातुमागच्छंति दिवाविहाराय। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं ॥५॥

पुनरपरं शारिपुत्र तत्र बुद्धक्षेत्रे संति हंसाः क्रौंचा मयूराश्च। ते त्रिष्कृत्वो रात्रौ त्रिष्कृत्वो दिवसस्य संनिपत्य संगीतिं कुर्वंति स्म स्वकस्वकानि च रुतानि प्रव्याहरंति। तेषां प्रव्याहरतामिंद्रियबलबोध्यंगशब्दो निश्चरति। तत्र तेषां मनुष्याणां तं शब्दं श्रुत्वा बुद्धमनसिकार उत्पद्यते धर्ममनसिकार उत्पद्यते संघमनसिकार उत्पद्यते॥ तत्किं मन्यसे शारिपुत्र तिर्यग्योनिगतास्ते

सत्त्वाः। न पुनरेवं द्रष्टव्यं। तत्कस्माद्धेतोः। नामापि शारिपुत्र तत्र बुद्धक्षेत्रे निरयाणां नास्ति तिर्यग्योनीनां यमलोकस्य नास्ति। ते पुनः पक्षिसंघास्तेनामितायुषा तथागतेन निर्मिता धर्मशब्दं निश्चारयंति। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं॥६॥

पुनरपरं शारिपुत्र तत्र बुद्धक्षेत्रे तासां च तालपंक्तीनां तेषां च किंकिणीजालानां वातेरितानां वल्गुर्मनोज्ञः शब्दो निश्चरति। तद्यथापि नाम शारिपुत्र कोटिशतसहस्रांगिकस्य दिव्यस्य तूर्यस्य चार्यैः संप्रवादितस्य वल्गुर्मनोज्ञः शब्दो निश्चरति एवमेव शारिपुत्र तासां च तालपंक्तीनां तेषां च किंकिणीजालानां वातेरितानां वल्गुर्मनोज्ञः शब्दो निश्चरति। तत्र तेषां मनुष्याणां तं शब्दं श्रुत्वा बुद्धानुस्मृतिः काये संतिष्ठति धर्मानुस्मृतिः काये संतिष्ठति संघानुस्मृतिः काये संतिष्ठति। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं॥७॥

तत्किं मन्यसे शारिपुत्र केन कारणेन स तथागतोऽमितायुर्नामोच्यते। तस्य खलु पुनः शारिपुत्र तथागतस्य तेषां च मनुष्याणामपरिमितमायुःप्रमाणं। तेन कारणेन स तथागतोऽमितायुर्नामोच्यते। तस्य च शारिपुत्र तथागतस्य दश कल्पा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य॥८॥

तत्किं मन्यसे शारिपुत्र केन कारणेन स तथागतोऽमिताभो नामोच्यते। तस्य खलु पुनः शारिपुत्र तथागतस्याभाप्रतिहता सर्वबुद्धक्षेत्रेषु। तेन कारणेन स तथागतोऽमिताभो नामोच्यते॥

तस्य च शारिपुत्र तथागतस्याप्रमेयः श्रावकसंघो येषां न सुकरं प्रमाणमाख्यातुं शुद्धानामर्हतां। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं ॥९॥

पुनरपरं शारिपुत्र येऽमितायुषस्तथागतस्य बुद्धक्षेत्रे सत्त्वा उपपन्नाः शुद्धा बोधिसत्त्वा अविनिवर्तनीया एकजातिप्रतिबद्धास्तेषां शारिपुत्र बोधिसत्त्वानां न सुकरं प्रमाणमाख्यातुमन्यत्राप्रमेयासंख्येया इति संख्यां गच्छंति ॥ तत्र खलु पुनः शारिपुत्र बुद्धक्षेत्रे सत्त्वैः प्रणिधानं कर्तव्यं। तत्कस्माद्धेतोः। यत्र हि नाम तथारूपैः सत्पुरुषैः सह समवधानं भवति। नावरमात्रकेण शारिपुत्र कुशलमूलेनामितायुषस्तथागतस्य बुद्धक्षेत्रे सत्त्वा उपपद्यंते। यः कश्चिच्छारिपुत्र कुलपुत्रो वा कुलदुहिता वा तस्य भगवतोऽमितायुषस्तथागतस्य नामधेयं श्रोष्यति श्रुत्वा च मनसिकरिष्यति एकरात्रं वा द्विरात्रं वा त्रिरात्रं वा चतूरात्रं वा पंचरात्रं वा षड्रात्रं वा सप्तरात्रं वाविक्षिप्तचित्तो मनसिकरिष्यति यदा स कुलपुत्रो वा कुलदुहिता वा कालं करिष्यति तस्य कालं कुर्वतः सोऽमितायुस्तथागतः श्रावकसंघपरिवृतो बोधिसत्त्वगणपुरस्कृतः पुरतः स्थास्यति सोऽविपर्यस्तचित्तः कालं करिष्यति च। स कालं कृत्वा तस्यैवामितायुषस्तथागतस्य बुद्धक्षेत्रे सुखावत्यां लोकधातावुपपत्स्यते। तस्मात्तर्हि शारिपुत्र इदमर्थवशं संपश्यमान एवं वदामि सत्कृत्य कुलपुत्रेण वा कुलदुहित्रा वा तत्र बुद्धक्षेत्रे चित्तप्रणिधानं कर्तव्यं ॥१०॥

तद्यथापि नाम शारिपुत्र अहमेतर्हि तां परिकीर्तयामि एवमेव

शारिपुत्र पूर्वस्यां दिश्यक्षोभ्यो नाम तथागतो मेरुध्वजो नाम तथागतो महामेरुर्नाम तथागतो मेरुप्रभासो नाम तथागतो मंजुध्वजो नाम तथागत एवंप्रमुखाः शारिपुत्र पूर्वस्यां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥११॥

एवं दक्षिणस्यां दिशि चंद्रसूर्यप्रदीपो नाम तथागतो यशःप्रभो नाम तथागतो महार्चिस्कंधो नाम तथागतो मेरुप्रदीपो नाम तथागतोऽनंतवीर्यो नाम तथागत एवंप्रमुखाः शारिपुत्र दक्षिणस्यां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१२॥

एवं पश्चिमायां दिश्यमितायुर्नाम तथागतोऽमितस्कंधो नाम तथागतोऽमितध्वजो नाम तथागतो महाप्रभो नाम तथागतो महारत्नकेतुर्नाम तथागतः शुद्धरश्मिप्रभो नाम तथागत एवंप्रमुखाः शारिपुत्र पश्चिमायां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१३॥

एवमुत्तरायां दिशि महार्चिस्कंधो नाम तथागतो वैश्वानरनिर्घोषो नाम तथागतो दुंदुभिस्वरनिर्घोषो नाम तथागतो

तस्य च शारिपुत्र तथागतस्याप्रमेयः श्रावकसंघो येषां न सुकरं प्रमाणमाख्यातुं शुद्धानामर्हतां। एवंरूपैः शारिपुत्र बुद्धक्षेत्रगुणव्यूहैः समलंकृतं तद्बुद्धक्षेत्रं ॥९॥

पुनरपरं शारिपुत्र येऽमितायुषस्तथागतस्य बुद्धक्षेत्रे सत्त्वा उपपन्नाः शुद्धा बोधिसत्त्वा अविनिवर्तनीया एकजातिप्रतिबद्धास्तेषां शारिपुत्र बोधिसत्त्वानां न सुकरं प्रमाणमाख्यातुमन्यत्राप्रमेयासंख्येया इति संख्यां गच्छंति ॥ तत्र खलु पुनः शारिपुत्र बुद्धक्षेत्रे सत्त्वैः प्रणिधानं कर्तव्यं। तत्कस्माद्धेतोः। यत्र हि नाम तथारूपैः सत्पुरुषैः सह समवधानं भवति। नावरमात्रकेण शारिपुत्र कुशलमूलेनामितायुषस्तथागतस्य बुद्धक्षेत्रे सत्त्वा उपपद्यंते। यः कश्चिच्छारिपुत्र कुलपुत्रो वा कुलदुहिता वा तस्य भगवतोऽमितायुषस्तथागतस्य नामधेयं श्रोष्यति श्रुत्वा च मनसिकरिष्यति एकरात्रं वा द्विरात्रं वा त्रिरात्रं वा चतूरात्रं वा पंचरात्रं वा षड्रात्रं वा सप्तरात्रं वाविक्षिप्तचित्तो मनसिकरिष्यति यदा स कुलपुत्रो वा कुलदुहिता वा कालं करिष्यति तस्य कालं कुर्वतः सोऽमितायुस्तथागतः श्रावकसंघपरिवृतो बोधिसत्त्वगणपुरस्कृतः पुरतः स्थास्यति सोऽविपर्यस्तचित्तः कालं करिष्यति च। स कालं कृत्वा तस्यैवामितायुषस्तथागतस्य बुद्धक्षेत्रे सुखावत्यां लोकधातावुपपत्स्यते। तस्मात्तर्हि शारिपुत्र इदमर्थवशं संपश्यमान एवं वदामि सत्कृत्य कुलपुत्रेण वा कुलदुहित्रा वा तत्र बुद्धक्षेत्रे चित्तप्रणिधानं कर्तव्यं ॥१०॥

तद्यथापि नाम शारिपुत्र अहमेतर्हि तां परिकीर्तयामि एवमेव

शारिपुत्र पूर्वस्यां दिश्यक्षोभ्यो नाम तथागतो मेरुध्वजो नाम तथागतो महामेरुर्नाम तथागतो मेरुप्रभासो नाम तथागतो मंजुध्वजो नाम तथागत एवंप्रमुखाः शारिपुत्र पूर्वस्यां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥११॥

एवं दक्षिणस्यां दिशि चंद्रसूर्यप्रदीपो नाम तथागतो यशःप्रभो नाम तथागतो महार्चिस्कंधो नाम तथागतो मेरुप्रदीपो नाम तथागतोऽनंतवीर्यो नाम तथागत एवंप्रमुखाः शारिपुत्र दक्षिणस्यां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१२॥

एवं पश्चिमायां दिश्यमितायुर्नाम तथागतोऽमितस्कंधो नाम तथागतोऽमितध्वजो नाम तथागतो महाप्रभो नाम तथागतो महारत्नकेतुर्नाम तथागतः शुद्धरश्मिप्रभो नाम तथागत एवंप्रमुखाः शारिपुत्र पश्चिमायां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१३॥

एवमुत्तरायां दिशि महार्चिस्कंधो नाम तथागतो वैश्वानरनिर्घोषो नाम तथागतो दुंदुभिस्वरनिर्घोषो नाम तथागतो

दुष्प्रधर्षो नाम तथागत आदित्यसंभवो नाम तथागतो जलेनि-प्रभो नाम तथागतः प्रभाकरो नाम तथागत एवंप्रमुखा शारि-पुत्रोत्तरायां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्व-कानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१४॥

एवमधस्तायां दिशि सिंहो नाम तथागतो यशो नाम तथा-गतो यशःप्रभासो नाम तथागतो धर्मो नाम तथागतो धर्मधरो नाम तथागतो धर्मध्वजो नाम तथागत एवंप्रमुखाः शारिपुत्रा-धस्तायां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्व-कानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदमचिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१५॥

एवमुपरिष्ठायां दिशि ब्रह्मघोषो नाम तथागतो नक्षत्रराजो नाम तथागत इंद्रकेतुध्वजराजो नाम तथागतो गंधोत्तमो नाम तथागतो गंधप्रभासो नाम तथागतो महार्चिस्कंधो नाम तथा-गतो रत्नकुसुमसंपुष्पितगात्रो नाम तथागतः सालेंद्रराजो नाम तथागतो रत्नोत्पलश्रीर्नाम तथागतः सर्वार्थदर्शो नाम तथागतः सुमेरुकल्पो नाम तथागत एवंप्रमुखाः शारिपुत्रोपरिष्ठायां दिशि गंगानदीवालुकोपमा बुद्धा भगवंतः स्वकस्वकानि बुद्धक्षेत्राणि जिह्वेंद्रियेण संछादयित्वा निर्वेठनं कुर्वंति। प्रतीयथ यूयमिदम-चिंत्यगुणपरिकीर्तनं सर्वबुद्धपरिग्रहं नाम धर्मपर्यायं ॥१६॥

तत्किं मन्यसे शारिपुत्र केन कारणेनायं धर्मपर्यायः सर्वबुद्धपरिग्रहो नामोच्यते। ये केचिच्छारिपुत्र कुलपुत्रा वा कुलदुहितरो वास्य धर्मपर्यायस्य नामधेयं श्रोष्यंति तेषां च बुद्धानां भगवतां नामधेयं धारयिष्यंति सर्वे ते बुद्धपरिगृहीता भविष्यंत्यविनिवर्तनीयाश्च भविष्यंत्यनुत्तरायां सम्यक्संबोधौ। तस्मात्तर्हि शारिपुत्र श्रद्दधाध्वं प्रतीयथ माकांक्षयथ मम च तेषां च बुद्धानां भगवतां। ये केचिच्छारिपुत्र कुलपुत्रा वा कुलदुहितरो वा तस्य भगवतोऽमितायुषस्तथागतस्य बुद्धक्षेत्रे चित्तप्रणिधानं करिष्यंति कृतं वा कुर्वंति वा सर्वे तेऽविनिवर्तनीया भविष्यंत्यनुत्तरायां सम्यक्संबोधौ तत्र च बुद्धक्षेत्र उपपत्स्यंत्युपपन्ना वोपपद्यंति वा। तस्मात्तर्हि शारिपुत्र श्राद्धैः कुलपुत्रैः कुलदुहितृभिश्च तत्र बुद्धक्षेत्रे चित्तप्रणिधिरुत्पादयितव्यः ॥१७॥

तद्यथापि नाम शारिपुत्राहमेतर्हि तेषां बुद्धानां भगवतामेवमचिंत्यगुणान्परिकीर्तयामि एवमेव शारिपुत्र ममापि ते बुद्धा भगवंत एवमचिंत्यगुणान्परिकीर्तयंति। सुदुष्करं भगवता शाक्यमुनिना शाक्याधिराजेन कृतं। सहायां लोकधातावनुत्तरां सम्यक्संबोधिमभिसंबुध्य सर्वलोकविप्रत्ययनीयो धर्मो देशितः कल्पकषाये सत्त्वकषाये दृष्टिकषाये आयुष्कषाये क्लेशकषाये॥१८॥

तन्ममापि शारिपुत्र परमदुष्करं यन्मया सहायां लोकधातावनुत्तरां सम्यक्संबोधिमभिसंबुध्य सर्वलोकविप्रत्ययनीयो धर्मो देशितः सत्त्वकषाये दृष्टिकषाये क्लेशकषाये आयुष्कषाये कल्पकषाये ॥१९॥

इदमवोचद्भगवानात्तमनाः। आयुष्मांश्शारिपुत्रस्ते च भिक्षवस्ते च बोधिसत्त्वाः सदेवमानुषासुरगंधर्वश्च लोको भगवतो भाषितमभ्यनंदन् ॥२०॥

॥ सुखावतीव्यूहो नाम महायानसूत्रं ॥

---

